।। ओं श्री गणेश शारदा गुरुभ्यो नमः ।।

।। श्री वेदव्यासाय नमः ।।

# ।। याजुष सूक्तानि ।।

## (द्वितीयो भागः)




For copies of this book please contact-

Shri S. Parameswaran

"Vedalaya"

14/52, Manjula,

Pestom Sagar Rd.No.2

Chembur, Mumbai- 400 089.

Tel: 2 524 2155

SRI GURUBHYO NAMAHA






MUTUAL TRUST — FRIENDSHIP -- TOLERANCE—OUR TRADITION

# Sri Sankara Jayanthi Celebration Committee

6, Savitha, 70,Pestomsagar, 2nd Road, Tilaknagar P.O., BOMBAY - 89.
Tel. Nos. : 5241864

Date .

## FOREWORD

Shri Parameswara Sharma has been conducting Veda Classes in Pestom Sagar Chembur, for over two decades, and has trained over a hundred vidyarthis comprising of a wide range of asthikas covering school children, college boys, office-goers and retired elders. He has been associated with our Shri Sankara Jayanthi Celebration Committee for the past 16 years conducting Rudra-japa-abhisheka-puja along with his disciples.

Shri Parameswara Sharma's teaching skill and the recitation of vedic hymns by his disciples have been appreciated by many eminent vedic scholars and patrons of Religious & Cultural Organisations.

A momentous occasion was in June 1994, when, pleased with the excellent Ghana recitation by a few of Parameswara Sharma's young disciples,and in appreciation of his glorious spiritual service,HisHoliness Shri Bharathi Theertha Swamigal, Sringeri Mutt blessed and honoured him with a *'Ponnadai'*

**Besides conducting veda classes, Shri Parameswara Sharma devotes his available time in compiling Vedic Literature into convenient books, in bold print, very useful to vidyarthis and religious practioners. He has compiled the following books :-**

**RUDRAM -CHAMAKAM**
**RUDRA KRAMAM**
**CHAMAKA KRAMAM**
**MAHANYASAM**
**UDAKA SHANTHI**
**ACHIDRAM**
**ASWAMEDHAM (1)**

**Copies of books compiled by Parameswara Sharma were presented to HIS HOLINESS SHRI BHARATHI THEERTHA SWAMIGAL, for His approval & blessings. His Holiness has gone through the books and has expressed His happiness and said that the books are very good and would be useful to the students**

**Appreciating his effort & dedication, His Holiness has blessed Shri Parameswara Sharma with a *SHREEMUKHAM.***

**I, on behalf of the Sri Sankara Jayanthi Celebration Committee, pray to Almighty to bestow upon Shri Parameswara Sharma, a healthy, blissful and long life to continue his noble social service of propagating Vedas and Vedic Culture among the youth and active citizens.**

V. V. Chalam

**V. Venkitachalam**
**Secretary**
**Sri Sankara Jayanthi Celebration Committee**

**13th September 1999.**

।। ओं गणेश शारदा गुरुभ्यो नमः ।।

।। श्री वेदव्यासाय नमः ।।

# ।। याजुष सूक्तानि ।।

## (द्वितीयो भागः)





*For copies of this book please contact-*
*Shri Parameswara Sharma*
*14/52 Manjula, Pestom Sagar*
*Chembur, Mumbai - 400 089*
*Tel: 524 2155.*

# याजुषसूक्तानि

## (द्वितीयो भागः)

## ।। विषयानुक्रमणिका ।।

# याजुषसूक्तानि

## (द्वितीयो भागः)

## ।। विषयानुक्रमणिका ।।

विषयाः पुटम्



*********

।। ओं श्रीगणेश शारदा गुरुभ्यो नमः।।

।।श्री वेदव्यासाय नमः।।

# ।। याजुषसूक्तानि ।।

(द्वितीयो भागः)

हरिः ओ(४)म्

## [३८] ।। श्रीरुद्रप्रश्नः ।।

अस्य श्री रुद्राद्ध्याय प्रश्न महामन्त्रस्य अघोर ऋषिः - अनुष्टुप्छन्दः - सङ्कर्षण मूर्तिस्वरूपो योऽसावादित्यः परमपुरुष स्स एष रुद्रो देवता।।

नमश्शिवायेति बीजम्।
शिवतरायेति शक्तिः।
नमस्सोमायेति कीलकम्।

श्रीसाम्बसदाशिवप्रीत्यर्थे जपे विनियोगः।।

करन्यासः-

अग्निहोत्रात्मने अङ्गुष्ठाभ्यान्नमः ।

दर्शपूर्णमासात्मने तर्जनीभ्यान्नमः ।

चातुर्मास्यात्मने मद्ध्यमाभ्यान्नमः ।

निरूढपशुबन्धात्मने अनामिकाभ्यान्नमः ।

ज्योतिष्टोमात्मने कनिष्ठिकाभ्यान्नमः ।

सर्वक्रत्वात्मने करतलकरपृष्ठाभ्यान्नमः ।

अङ्गन्यासः-

अग्निहोत्रात्मने हृदयाय नमः।

दर्शपूर्णमासात्मने शिरसे स्वाहा।

चातुर्मास्यात्मने शिखायै वषट्।

निरूढपशुबन्धात्मने कवचाय हुम्।

ज्योतिष्टोमात्मने नेत्रत्रयाय वौषट्।

सर्वक्रत्वात्मने अस्त्राय फट्।

भूर्भुवस्सुवरोमिति दिग्बन्धः।।

ध्यानम्-

आपाताळ नभस्थलान्त भुवन ब्रह्माण्डमाविस्फुर-
ज्योतिस्फाटिकलिङ्गमौळि विलसत्पूर्णेन्दु वान्तामृतैः।
अस्तोकाप्लुत-मेकमीशमनिशं रुद्रानुवाकान् जपन्
ध्यायेदीफ्सित सिद्धये ध्रुवपदं विप्रोऽभिषिञ्चेच्छिवम्।।

पीठं यस्य धरित्री जलधरकलशं लिङ्गमाकाशमूर्तिम्
नक्षत्रं पुष्पमाल्यं ग्रहगण कुसुमं चन्द्रवह्न्यर्क नेत्रम्।
कुक्षिस्सप्तसमुद्रं हिमगिरिशयनं सप्तपाताळपादम्
वेदंवक्त्रं षडङ्गं दशदिशिवसनं दिव्यलिङ्गन्नमामि।।

।। श्रीरुद्रप्रश्नः ।।

ध्यानम्-

ब्रह्माण्डव्याप्तदेहा भसितहिमरुचा भासमानाभुजङ्गैः
कण्ठेकालाः कपर्द्दाकलित शशिकला श्चण्डकोदण्डहस्ताः।
त्र्यक्षा रुद्राक्षमालाः प्रकटित विभवाश्शाम्भवा मूर्तिभेदाः
रुद्राः श्रीरुद्रसूक्त प्रकटित विभवा नः प्रयच्छन्तु सौख्यम्।।

ओं गणानान्त्वा गणपतिँ हवामहे कविङ्कवीनामुपमश्रवस्तमम्। ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नश्शृण्वन्नूतिभिस्सीदसादनम्।।

श्रीमहागणपतये नमः।।

शञ्चमे मयश्चमे प्रियञ्च मेऽनुकामश्च मे
कामश्चमे सौमनसश्चमे भद्रञ्चमे श्रेयश्च मे
वस्यश्चमे यशश्चमे भगश्चमे द्रविणञ्च मे
यन्ता चमे धर्ता चमे क्षेमश्चमे धृतिश्चमे
विश्वञ्चमे महश्चमे सँव्विच्चमे ज्ञात्रञ्चमे
सूश्चमे प्रसूश्चमे सीरञ्चमे लयश्च म
ऋतञ्च मेऽमृतञ्च मेऽयक्ष्मञ्च
मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्त्वञ्च
मेऽनमित्रञ्च मेऽभयञ्च मे सुगञ्च मे
शयनञ्च मे सूषा च मे सुदिनञ्च मे।।

ओं शान्तिश्शान्तिश्शान्तिः।।

।। श्रीरुद्रप्रश्नः ।।

ओन्नमो भगवते रुद्राय।।

(१) नमस्ते रुद्र मन्यव उतो त इषवे नमः।
नमस्ते अस्तु धन्वने बाहुभ्यामुत ते नमः।।

या त इषुश्शिवतमा शिवं बभूव ते धनुः।
शिवा शरव्या या तव तया नो रुद्र मृडय।।

या ते रुद्र शिवा तनूरघोरापापकाशिनी।
तया नस्तनुवा शन्तमया गिरिशन्ता-
भिचाकशीहि।।

यामिषुङ्गिरिशन्त हस्ते बिभर्ष्यस्तवे।।
शिवाङ्गिरत्र ताङ्कुरु मा हिँसीः पुरुष-
ञ्जगत्।।

शिवेन वचसा त्वा गिरिशाच्छा वदामसि।
यथा न-स्सर्वमि-ज्जगदयक्ष्मꣳसुमना असत्।
अदुध्यवोच- दधिवक्ता प्रथमो दैव्यो
भिषक्। अहीꣳश्च सर्वाञ्जम्भयन्-थ्सर्वाश्च
यातुधान्यः।।
असौ यस्ताम्रो अरुण उत बभ्रु-
स्सुमङ्गलः। ये चेमाꣳरुद्रा अभितो दिक्षु-
श्रिता-स्सहस्रशोऽवैषाꣳहेड ईमहे।।
असौ योऽवसर्पति नीलग्रीवो विलोहितः।
उतैनङ्गोपा अदृशन्नदृशन्नुदहार्यः। उतैन-
व्विँश्वा भूतानि स दृष्टो मृडयाति नः।।

नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे। अथो ये अस्य सत्त्वानोऽहन्तेभ्योऽकरन्नमः।।

प्रमुञ्च धन्वन- स्त्वमुभयो- रार्त्नियो- र्ज्याम्। याश्च ते हस्त इषवः परा ता भगवो वप।।

अवतत्य धनुस्त्व ँ सहस्राक्ष शतेषुधे। निशीर्य शल्यानां मुखा शिवो नस्सुमना भव।

विज्यन्धनुः कपर्दिनो विशल्यो बाणवा ँ उत। अनेशन्नस्येषव आभुरस्य निषङ्गथिः।।

।। श्रीरुद्रप्रश्नः ।।

या ते हेति- र्मीढुष्टम हस्ते बभूव ते धनुः। तयाऽस्मान् विश्वतस्त्वमयक्ष्मया परिब्भुज।।

नमस्ते अस्त्वायुधाया-नातताय धृष्णवे। उभाभ्यामुत ते नमो बाहुभ्यान्तव धन्वने।।

परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः। अथो य इषुधि-स्तवारे अस्म-न्निधेहि तम्।।

****

नमस्ते अस्तु भगवन्विश्वेश्वराय महादेवाय त्र्यम्बकाय त्रिपुरान्तकाय त्रिका(ला)ग्निकालाय कालाग्निरुद्राय नीलकण्ठाय मृत्युञ्जयाय सर्वेश्वराय सदाशिवाय (शङ्कराय) श्रीमन्महादेवाय नमः ।।

****

२ नमो हिरण्यबाहवे सेनान्ये दिशाञ्च
पतये नमो-
नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो
नमस्सस्पिञ्जराय त्विषीमते पथीनां पतये
नमो-
नमो बभ्लुशाय विव्याधिनेऽन्नानां पतये नमो
नमो हरिकेशायोपवीतिने पुष्टानां पतये नमो
नमो भवस्य हेत्यै जगतां पतये नमो
नमो रुद्रायाततताविने क्षेत्राणां पतये नमो
नम-स्सूताया-हन्त्याय वनानां पतये नमो

नमो रोहिताय स्थपतये वृक्षाणां पतये नमो
नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमो
नमो भुवन्तये वारिवस्कृतायौ-षधीनां पतये
नमो-
नम उच्चैर्घोषाया-क्रन्दयते पत्तीनां पतये नमो
नमः कृथ्स्नवीताय धावते सत्त्वनां पतये
नमः।।

****

(३) नम स्सहमानाय निव्याधिन

आव्याधिनीनां पतये नमो-

नमःककुभाय निषङ्गिणे स्तेनानां पतये नमो

नमो निषङ्गिण इषुधिमते तस्कराणां पतये

नमो-

नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो

नमो निचेरवे परिचरायाऽरण्यानां पतये नमो

नम-स्सृकाविभ्यो जिघाꣳसद्भ्यो मुष्णतां

पतये नमो-

नमोऽसिमद्भ्यो नक्तञ्चरद्भ्यः प्रकृन्तानां

पतये नमो-

नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये

नमो-

नम इषुमद्भ्यो धन्वाविभ्यश्च वो नमो

नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो

नम आयच्छद्भ्यो विसृजद्भ्यश्च वो नमो

नमोऽस्यद्भ्यो विद्ध्यद्भ्यश्च वो नमो

नम आसीनेभ्य-श्शयानेभ्यश्च वो नमो

नम-स्स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो

नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो

नम-स्सभाभ्य- स्सभापतिभ्यश्च वो नमो

नमो अश्वेभ्योऽश्वपतिभ्यश्च वो नमः।।

****

(४) नम आव्याधिनीभ्यो विविद्ध्यन्तीभ्यश्च वो नमो-

नम उगणाभ्यस्तृꣳहतीभ्यश्च वो नमो
नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो
नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो
नमो गणेभ्यो गणपतिभ्यश्च वो नमो
नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो
नमो महद्भ्यः क्षुल्लकेभ्यश्च वो नमो
नमो रथिभ्योऽरथेभ्यश्च वो नमो
नमो रथेभ्यो रथपतिभ्यश्च वो नमो
नम- स्सेनाभ्य- स्सेनानिभ्यश्च वो नमो

नमः क्षत्तृभ्य स्सङ्ग्रहीतृभ्यश्च वो नमो
नम- स्तक्षभ्यो रथकारेभ्यश्च वो नमो
नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो
नमः पुञ्जिष्टेभ्यो निषादेभ्यश्च वो नमो
नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमो
नमो मृगयुभ्य- श्श्वनिभ्यश्च वो नमो
नम- श्श्वभ्य- श्श्वपतिभ्यश्च वो नमः ।।

****

(५) नमो भवाय च रुद्राय च
नम श्शर्वाय च पशुपतये च
नमो नीलग्रीवाय च शितिकण्ठाय च
नमः कपर्दिने च व्युप्तकेशाय च
नम स्सहस्राक्षाय च शतधन्वने च
नमो गिरिशाय च शिपिविष्टाय च
नमो मीढुष्टमाय चेषुमते च
नमो ह्रस्वाय च वामनाय च
नमो बृहते च वर्षीयसे च
नमो वृद्धाय च सँव्वृद्ध्वने च
नमो अग्रियाय च प्रथमाय च

नम आशवे चाजिराय च
नम शशीघ्रियाय च शीभ्याय च
नम ऊर्म्याय चावस्वन्याय च
नम स्स्रोतस्याय च द्वीप्याय च।।

****

(६) नमो ज्येष्ठाय च कनिष्ठाय च

नमः पूर्वजाय चापरजाय च

नमो मद्ध्यमाय चापगल्भाय च

नमो जघन्याय च बुद्ध्नियाय च

नमः स्सोभ्याय च प्रतिसर्याय च

नमो याम्याय च क्षेम्याय च

नमः उर्वर्याय च खल्याय च

नमः श्श्लोक्याय चावसान्याय च

नमो वन्याय च कक्ष्याय च

नमः श्श्रवाय च प्रतिश्रवाय च

नमः आशुषेणाय चाशुरथाय च

नम श्शूराय चावभिन्दते च
नमो वर्मिणे च वरूथिने च
नमो बिल्मिने च कवचिने च
नम श्श्रुताय च श्रुतसेनाय च।।

****

(७) नमो दुन्दुभ्याय चाहनन्याय च

नमो धृष्णवे च प्रमृशाय च

नमो दूताय च प्रहिताय च

नमो निषङ्गिणे चेषुधिमते च

नमस्तीक्ष्णेषवे चायुधिने च

नमस्स्वायुधाय च सुधन्वने च

नमस्स्रुत्याय च पथ्याय च

नमः काट्याय च नीप्याय च

नमस्सूद्याय च सरस्याय च

नमो नाद्याय च वैशन्ताय च

नमः कूप्याय चावट्याय च

नमो वर्ष्याय चावर्ष्याय च
नमो मेघ्याय च विद्युत्याय च
नम ईद्ध्रियाय चातप्याय च
नमो वात्याय च रेष्मियाय च
नमो वास्तव्याय च वास्तुपाय च।।

****

(८) नम स्सोमाय च रुद्राय च
नम स्ताम्राय चारुणाय च
नम श्शङ्गाय च पशुपतये च
नम उग्राय च भीमाय च
नमो अग्रेवधाय च दूरेवधाय च
नमो हन्त्रे च हनीयसे च
नमो वृक्षेभ्यो हरिकेशेभ्यो
नम स्ताराय
नम श्शंभवे च मयोभवे च
नम श्शङ्कराय च मयस्कराय च
नम श्शिवाय च शिवतराय च

नमस्तीर्थ्याय च कूल्याय च
नमः पार्याय चावार्याय च
नमः प्रतरणाय चोत्तरणाय च
नम आतार्याय चालाद्याय च
नमश्शष्प्याय च फेन्याय च
नमस्सिकत्याय च प्रवाह्याय च ।।

****

## ।। श्रीरुद्रप्रश्नः ।।

(९) नम॑ इरि॒ण्या॑य च प्रप॒त्थ्या॑य च॒
नमः॑ किꣳशि॒ला॑य च॒ क्षय॑णाय च॒
नमः॑ कप॒र्दिने॑ च पु॒लस्त॑ये च॒
नमो॒ गोष्ठ्या॑य च॒ गृह्या॑य च॒
नम॒स्तल्प्या॑य च॒ गेह्या॑य च॒
नमः॑ का॒ट्या॑य च गह्व॒रेष्ठा॑य च॒
नमो॑ ह्र॒दय्या॑य च नि॒वेष्प्या॑य च॒
नमः॑ पाꣳस॒व्या॑य च र॒जस्या॑य च॒
नम॒श्शुष्क्या॑य च हरि॒त्या॑य च॒
नमो॒ लोप्या॑य चो॒लप्या॑य च॒
नम॑ ऊ॒र्व्या॑य च सू॒र्म्या॑य च॒

नमः पर्ण्याय च पर्णशद्याय च
नमोऽपगुरमाणाय चाभिघ्नते च
नम आक्खिदते च प्रक्खिदते च
नमो वः किरिकेभ्यो देवानाᳲहृदयेभ्यो
नमो विक्षीणकेभ्यो नमो विचिन्वत्केभ्यो
नम आनिर्हतेभ्यो नम आमीवत्केभ्यः ।।

****

(१०) द्रापे अन्धसस्पते दरिद्रन्नीललोहित। एषां पुरुषाणामेषां पशूनां मा भेर्माऽरो मो एषाङ्-किञ्चनाममत्।।

या ते रुद्र शिवा तनू श्शिवा विश्वाहभेषजी। शिवा रुद्रस्य भेषजी तया नो मृड जीवसे।।

इमा॒ँ रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतिम्। यथा न श्शमसद्द्विपदे चतुष्पदे विश्वं पुष्टङ्-ग्रामे अस्मिन्ननातुरम्।।

मृडा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते। यच्छञ्च योश्च मनुरायजे

पिता तदश्याम तव रुद्र प्रणीतौ।।

मा नो महान्तमुत मानो अर्भकं मा न उक्षन्तमुत मा न उक्षितम्। मा नो वधीः पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र रीरिषः।।

मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। वीरान्मानो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते।।

आरात्ते गोघ्न उत पूरुषघ्ने क्षयद्वीराय सुम्नमस्मे ते अस्तु। रक्षा च नो अधि च देव ब्रूह्यधा च न श्शर्म यच्छ द्विबर्हाः।।

स्तुहि श्रुतङ्गर्तसदँ-य्युवानं मृगन्न
भीममुपहत्नुमुग्रम्। मृडा जरित्रे रुद्र स्तवानो
अन्यन्ते अस्मन्निवपन्तु सेनाः।।

परिणो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य
दुर्मतिरघायोः। अवस्थिरा मघवद्भ्य स्तनुष्व
मीढ्व स्तोकाय तनयाय मृडय।।

मीढुष्टम शिवतम शिवोन स्सुमना भव।
परमे वृक्ष आयुधन्निधाय कृत्तिँ व्वसान
आचर पिनाकं बिभ्रदागहि।।

विकिरिद विलोहित नमस्ते अस्तु
भगवः। यास्ते सहस्र७ हेतयोऽन्यमस्मन्नि-

वपन्तु ताः ।।

सहस्राणि सहस्रधा बाहुवोस्तव हेतयः ।
तासामीशानो भगवः पराचीना मूखा कृधि ।।

****

(११) सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम्। तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि।।

अस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि।

नीलग्रीवा शितिकण्ठा श्शर्वा अधः क्षमाचराः।

नीलग्रीवा शितिकण्ठा दिवँ रुद्रा उपश्रिताः।

ये वृक्षेषु सस्पिञ्जरा नीलग्रीवा विलोहिताः।

ये भूतानामधिपतयो विशिखासः कपर्दिनः। ये अन्नेषु विविद्ध्यन्ति पात्रेषु पिबतो जनान्। ये पथां पथिरक्षय ऐलबृदा यव्युधः। ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिगणः। य एतावन्तश्च भूयाँ सश्च दिशो रुद्रा वितस्थिरे। तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि।।

नमो रुद्रेभ्यो ये पृथिव्याँ य्येऽन्तरिक्षे ये दिवि येषामन्नँ-व्वातो वरूषमिषव स्तेभ्यो दश प्राची-र्दश दक्षिणा दश प्रतीची-र्दशोदीची-

दशोदूर्ध्वा- स्तेभ्यो नमस्ते नो मृडयन्तु ते
यन्द्विष्मो यश्च नो द्वेष्टि तँव्वो जम्भे दधामि ।।

*********

नमो रुद्रेभ्यो ये पृथिव्याँ य्येषामन्नमिषव-स्तेभ्यो दश प्राची र्दश दक्षिणा दश प्रतीची र्दशोदीची र्दशोर्ध्वा-स्तेभ्यो नमस्ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तँ व्वो जम्भे दधामि।।

नमो रुद्रेभ्यो येऽन्तरिक्षे येषाँ व्वात इषव-स्तेभ्यो दश प्राची र्दश दक्षिणा दश प्रतीची र्दशोदीची र्दशोर्ध्वा स्तेभ्यो नमस्ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तँ व्वो जम्भे दधामि।।

नमो रुद्रेभ्यो ये दिवि येषाँ-
व्वर्षमिषव-स्तेभ्यो दश प्राची र्दश दक्षिणा
दश प्रतीची र्दशोदीची र्दशोर्द्ध्वा स्तेभ्यो
नमस्ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो
द्वेष्टि तँ व्वो जम्भे दधामि।।

*********

त्र्यम्बकँ-य्यजामहे सुगन्धिं पुष्टिवर्द्धनम्।
उर्वारुकमिव बन्धनान्मृत्यो-र्मुक्षीय माऽमृतात्

****

यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाऽऽविवेश तस्मै रुद्राय नमो अस्तु।।

****

तमुष्टुहि यस्स्विषु स्सुधन्वा यो विश्वस्य क्षयति भेषजस्य। यक्ष्वामहे सौमनसाय रुद्रन्नमोभि र्देवमसुरन्दुवस्य।।

अयं मे हस्तो भगवानयं मे भगवत्तरः। अयं मे विश्वभेषजोऽय शिवाभिमर्शनः।।

ये ते सहस्रमयुतं पाशा मृत्यो मर्त्याय हन्तवे। तान् यज्ञस्य मायया सर्वानव यजामहे।।

मृत्यवे स्वाहा मृत्यवे स्वाहा।।

ओन्नमो भगवते रुद्राय विष्णवे मृत्युर्मे पाहि। प्रणानाङ्ग्रन्थिरसि रुद्रो मा विशान्तकः। तेनान्नेनाप्यायस्व।।

ओं शान्तिश्शान्तिश्शान्तिः।।

## ।। चमक प्रश्नः ।।

## [३९]

(१) अग्नाविष्णू सजोषसेमा वर्द्धन्तु वाङ्गिरः। द्युम्नै र्वाजेभिरागतम्।।

वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे-

श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे सुवश्च मे प्राणश्च मेऽपानश्च मे व्यानश्च मेऽसुश्च मे-

चित्तञ्च म आधीतञ्च मे वाक्च मे मनश्च मे चक्षुश्च मे श्रोत्रञ्च मे दक्षश्च मे बलञ्च म-

।। चमक प्रश्नः ।।

ओजश्च मे सहश्च म आयुश्च मे जरा च म आत्मा च मे तनूश्च मे शर्म च मे वर्म च मे-

ऽङ्गानि च मेऽस्थानि च मे परूँषि च मे शरीराणि च मे।।

****

।। चमक प्रश्नः ।।

(२) ज्यैष्ठ्यञ्च म आधिपत्यञ्च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे-

वरिमा च मे प्रथिमा च मे वर्ष्मा च मे द्राघुया च मे वृद्धञ्च मे वृद्धिश्च मे सत्यञ्च मे श्रद्धा च मे-

जगच्च मे धनञ्च मे वशश्च मे त्विषिश्च मे क्रीडा च मे मोदश्च मे जातञ्च मे जनिष्यमाणञ्च मे-

सूक्तञ्च मे सुकृतञ्च मे वित्तञ्च मे वेद्यञ्च मे भूतञ्च मे भविष्यच्च मे सुगञ्च

सुपथञ्च म-

ऋद्धञ्च म ऋद्धिश्च मे क्लृप्तञ्च मे
क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे।।

****

(२) शञ्च मे मयश्च मे प्रियञ्च
मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे
भद्रञ्च मे श्रेयश्च मे-

वस्यश्च मे यशश्च मे भगश्च मे
द्रविणञ्च मे यन्ता च मे धर्ता च मे क्षेमश्च
मे धृतिश्च मे-

विश्वञ्च मे महश्च मे सँव्विच्च मे

।। चमक प्रश्नः ।।

ज्ञात्रञ्च मे सूश्च मे प्रसूश्च मे सीरञ्च मे लयश्च म ऋतञ्च मेऽमृतञ्च मेऽयक्ष्मञ्च मे-

ऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वञ्च मेऽनमित्रञ्च मेऽभयञ्च मे सुगञ्च मे शयनञ्च मे सूषा च मे सुदिनञ्च मे।।

****

(४) ऊर्क्च मे सूनृता च मे पयश्च मे रसश्च मे घृतञ्च मे मधु च मे सग्धिश्च मे सपीतिश्च मे-

कृषिश्च मे वृष्टिश्च मे जैत्रञ्च म औद्भिद्यञ्च मे रयिश्च मे रायश्च मे पुष्टञ्च मे पुष्टिश्च मे-

विभु च मे प्रभु च मे बहु च मे भूयश्च मे पूर्णञ्च मे पूर्णतरञ्च मेऽक्षितिश्च मे कूयवाश्च मे-

ऽन्नञ्च मेऽक्षुच्च मे व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे

खल्वाँश्च मे-

गोधूमाश्च मे मसुराश्च मे

प्रियङ्गवश्च मेऽणवश्च मे श्यामाकाश्च मे

नीवाराश्च मे।।

****

(५) अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यञ्च मेऽयश्च मे-

सीसञ्च मे त्रपुश्च मे श्यामञ्च मे लोहञ्च मेऽग्निश्च म आपश्चमेवीरुधश्च म ओषधयश्च मे-

कृष्टपच्यञ्च मेऽकृष्टपच्यञ्च मे ग्राम्याश्च मे पशव आरण्याश्च यज्ञेन कल्पन्ताँ-व्वित्तञ्च मे वित्तिश्च मे भूतञ्च मे भूतिश्च मे-

वसु च मे वसतिश्च मे कर्म च मे

शक्तिश्च मेऽर्थश्च म एमश्च म इतिश्च मे गतिश्च मे।।

****

(६) अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे सविता च म इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे-

पूषा च म इन्द्रश्च मे बृहस्पतिश्च म इन्द्रश्च मे मित्रश्च म इन्द्रश्च मे वरुणश्च म इन्द्रश्च मे-

त्वष्टा च म इन्द्रश्च मे धाता च म इन्द्रश्च मे विष्णुश्च म इन्द्रश्च मेऽश्विनौ च

म इन्द्रश्च मे-

मरुतश्च म इन्द्रश्च मे विश्वे च मे
देवा इन्द्रश्च मे पृथिवी च म इन्द्रश्च
मेऽन्तरिक्षञ्च म इन्द्रश्च मे-

द्यौश्च म इन्द्रश्च मे दिशश्च म
इन्द्रश्च मे मूर्द्धा च म इन्द्रश्च मे
प्रजापतिश्च म इन्द्रश्च मे।।

****

(७) अ॒ꣳशु॒श्च॑ मे र॒श्मिश्च॒ मेऽदा॑भ्यश्च॒ मेऽधि॑पतिश्च म उ॒पा॒ꣳशुश्च॑ मेऽन्तर्या॒मश्च॑ म ऐन्द्रवा॒यवश्च॑ मे मैत्रावरु॒णश्च॑ म-

आश्वि॒नश्च॑ मे प्रतिप्र॒स्थान॑श्च मे शु॒क्रश्च॑ मे म॒न्थी च॑ म आग्र॒यणश्च॑ मे वैश्वदे॒वश्च॑ मे ध्रु॒वश्च॑ मे वैश्वान॒रश्च॑ म-

ऋतुग्र॒हाश्च॑ मेऽतिग्रा॒ह्या॑श्च म ऐन्द्रा॒ग्नश्च॑ मे वैश्वदे॒वश्च॑ मे मरुत्व॒तीया॑श्च मे माहे॒न्द्रश्च॑ म आदि॒त्यश्च॑ मे सावि॒त्रश्च॑ मे

सारस्व॒तश्च॑ मे पौ॒ष्णश्च॑ मे पात्नीव॒तश्च॑ मे हारियोज॒नश्च॑ मे।।

****

(८) इद्ध्मश्च मे बर्हिश्च मे वेदिश्च मे धिष्णियाश्च मे स्रुचश्च मे चमसाश्च मे ग्रावाणश्च मे स्वरवश्च म-

उपरवाश्च मेऽधिषवणे च मे द्रोणकलशश्च मे वायव्यानि च मे पूतभृच्च म आधवनीयश्च म आग्नीद्ध्रञ्च मे हविर्द्धानञ्च मे-

गृहाश्च मे सदश्च मे पुरोडाशाश्च मे पचताश्च मेऽवभृथश्च मे स्वगाकारश्च मे।।

****

।। चमक प्रश्नः ।।

(९) अग्निश्च मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे-

दितिश्च मे द्यौश्च मे शक्वरीरङ्गुलयो दिशश्च मे यज्ञेन कल्पन्तामृक्च मे साम च मे स्तोमश्च मे यजुश्च मे-

दीक्षा च मे तपश्च म ऋतुश्च मे व्रतञ्च मेऽहोरात्रयो वृष्ट्या बृहद्रथन्तरे च मे यज्ञेन कल्पेताम्।।

****

(१०) गर्भाश्च मे वथ्साश्च मे त्र्यविश्च मे त्र्यवी च मे दित्यवाट् च मे दित्यौही च मे पञ्चाविश्च मे पञ्चावी च मे-

त्रिवथ्सश्च मे त्रिवथ्सा च मे तुर्यवाट् च मे तुर्यौही च मे पष्ठवाच्च मे पष्ठौही च म उक्षा च मे वशा च म-

ऋषभश्च मे वेहच्च मेऽनड्वाञ्च मे धेनुश्च म आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतामपानो यज्ञेन कल्पताँ-व्यानो यज्ञेन कल्पतां-

।। चमक प्रश्नः ।।

चक्षुर्यज्ञेन कल्पताꣳ श्रोत्रँ-य्यज्ञेन कल्पतां मनो यज्ञेन कल्पताँ-व्वाग्यज्ञेन कल्पता-मात्मा यज्ञेन कल्पताँ य्यज्ञो यज्ञेन कल्पताम्।।

****

(११) एका च मे तिस्रश्च मे पञ्च च मे सप्त च मे नव च म एकादश च मे त्रयोदश च मे पञ्चदश च मे-

सप्तदश च मे नवदश म एकवि ँ शतिश्च मे त्रयोवि ँ शतिश्च मे पञ्चवि ँ शतिश्च मे सप्तवि ँ शतिश्च मे नववि ँ शतिश्च म एकत्रि ँ शच्च मे-

त्रयस्त्रि ँ शच्च मे चतस्रश्च मेऽष्टौ च मे द्वादश च मे षोडश च मे वि ँ शतिश्च मे चतुर्वि ँ शतिश्च मेऽष्टावि ँ शतिश्च मे

।। चमक प्रश्नः ।।

द्वात्रि ँ शच्च मे षट्त्रि ँ शच्च मे चत्वारि ँ शच्च मे चतुश्चत्वारि ँ शच्च मेऽष्टाचत्वारि ँ शच्च मे वाजश्च प्रसवश्चापिजश्च क्रतुश्च सुवश्च मूर्द्धा च व्यश्निजय-श्चान्त्यायन-श्चान्त्यश्च भौवनश्च भुवनश्चाधिपतिश्च ।।

********

।। चमक प्रश्नः ।।

इडा देवहू र्मनु र्यज्ञनी र्बृहस्पति-
रुक्थामदानि श॑सिषद्विश्वे देवास्सूक्तवाचः
पृथिवि मात र्मामा हि॑सी र्मधु मनिष्ये मधु
जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि
मधुमतीन्देवेभ्यो वाचमुद्यास॑ शुश्रूषेण्यां
मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै
पितरोऽनु मदन्तु।।

ओं शान्तिश्शान्तिश्शान्तिः।।

****

## ।। पुरुष सूक्तम् ।।

[४०] सहस्रशीर्षा पुरुषः। सहस्राक्ष स्सहस्रपात्। स भूमिँ व्विश्वतो वृत्त्वा। अत्यतिष्ठद्दशाङ्गुलम्।।

पुरुष एवेद ँ सर्वम्। यद्भूतँ य्यच्च भव्यम्। उतामृतत्त्वस्येशानः। यदन्नेनातिरोहति।।

एतावानस्य महिमा। अतो ज्याया ँश्च पूरुषः। पादोऽस्य विश्वा भूतानि। त्रिपादस्यामृतन्दिवि।।

।। पुरुष सूक्तम् ।।

त्रिपादूर्ध्व उदैत्पुरुषः। पादोऽस्येहा भवात्पुनः। ततो विष्वङ् व्यक्रामत्। साशनानशने अभि।।

तस्माद्विराडजायत। विराजो अधि पूरुषः। स जातो अत्यरिच्यत। पश्चाद्भूमिमथो पुरः।।

यत्पुरुषेण हविषा। देवा यज्ञमतन्वत। वसन्तो अस्यासीदाज्यम्। ग्रीष्म इद्ध्म श्शरद्धविः।।

## ।। पुरुष सूक्तम् ।।

सप्तास्यासन्परिधयः। त्रिस्सप्त समिधः कृताः। देवा यद्यज्ञन्तन्वानाः। अबद्ध्नन् पुरुषं पशुम्।।

तँय्यज्ञं बर्हिषि प्रौक्षन्न्। पुरुषञ्जात-मग्रतः। तेन देवा अयजन्त। साद्ध्या ऋषयश्च ये।।

तस्माद्यज्ञात्सर्वहुतः। संभृतं पृषदाज्यम्। पशूꣳ स्ताꣳ श्चक्रे वायव्यान्। आरण्यान् ग्राम्याश्च ये।।

## ।। पुरुष सूक्तम् ।।

तस्माद्यज्ञात्सर्वहुतः। ऋच स्सामानि जज्ञिरे। छन्दाꣳसि जज्ञिरे तस्मात्। यजुस्तस्मादजायत।।

तस्मादश्वा अजायन्त। येकेचोभयादतः। गावो ह जज्ञिरे तस्मात्। तस्माज्जाता अजावयः।।

यत्पुरुषँ व्यदधुः। कतिधा व्यकल्पयन्न्। मुखङ्किमस्य कौ बाहू। कावूरू पादावुच्येते।।

## ।। पुरुष सूक्तम् ।।

ब्राह्मणोऽस्य मुखमासीत्। बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः। पद्भ्या॑ शूद्रो अजायत।।

चन्द्रमा मनसो जातः। चक्षो स्सूर्यो अजायत। मुखादिन्द्रश्चाग्निश्च। प्राणाद्वायु-रजायत।।

नाभ्या आसीदन्तरिक्षम्। शीर्ष्णो द्यौ स्समवर्तत। पद्भ्यां भूमि र्दिश श्श्रोत्रात्। तथा लोका॑ अकल्पयन्।।

## ।। पुरुष सूक्तम् ।।

वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्ण-न्तमसस्तु पारे। सर्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वाऽभिवदन् यदास्ते।।

धाता पुरस्ताद्यमुदाजहार। शक्रः प्रविद्वान् प्रदिश श्चतस्त्रः। तमेवँ व्विद्वानमृत इह भवति। नान्यः पन्था अयनाय विद्यते।।

यज्ञेन यज्ञमयजन्त देवाः। तानि धर्माणि प्रथमान्यासन्न्। ते ह नाकं महिमानस्सचन्ते। यत्र पूर्वे साद्ध्या स्सन्ति देवाः।।

********

## ।। उत्तरनारायणम् ।।

[४१] अद्भ्य स्संभूतः पृथिव्यै रसाच्च। विश्वकर्मण स्समवर्तताधि। तस्य त्वष्टा विदधद्रूपमेति। तत्पुरुषस्य विश्वमाजानमग्रे।।

वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्णं तमसः परस्तात्। तमेवँ विद्वानमृत इह भवति। नान्यः पन्था विद्यतेऽयनाय।।

प्रजापतिश्चरति गर्भे अन्तः। अजायमानो बहुधा विजायते। तस्य धीराः परि जानन्ति योनिम्। मरीचीनां पदमिच्छन्ति वेधसः।।

## ।। उत्तरनारायणम् ।।

यो देवेभ्य आतपति। यो देवानां पुरोहितः। पूर्वो यो देवेभ्यो जातः। नमो रुचाय ब्राह्मये।

रुचं ब्राह्म- ञ्जनयन्तः। देवा अग्रे तदब्रुवन्। यस्त्वैवं ब्राह्मणो विद्यात्। तस्य देवा असन्वशे।।

ह्रीश्च ते लक्ष्मीश्च पत्न्यौ। अहोरात्रे पार्श्वे। नक्षत्राणि रूपम्। अश्विनौ व्यात्तम्।।

इष्टं मनिषाण। अमुं मनिषाण। सर्वं मनिषाण।।

*********

## ।। महानारायणम् ।।

[४२] सहस्रशीर्षन्देवँ विश्वाक्षँ विश्वशंभुवम्। विश्वन्नारायणन्देवमक्षरं परमं पदम्।
विश्वतः परमान्नित्यँ विश्वन्नारायण॰ हरिम्। विश्वमेवेदं पुरुषस्तद्विश्व-मुपजीवति।।
पतिँ-विश्वस्यात्मेश्वर॰ शाश्वत॰ शिवमच्युतम्। नारायणं महाज्ञेयँ विश्वात्मानं परायणम्।।
नारायण परो ज्योतिरात्मा नारायणः परः। नारायण परं ब्रह्मतत्त्व-न्नारायण परः। नारायण परो-द्ध्याता-द्ध्यानन्नारायणःपरः।।

## ।। महानारायणम् ।।

यच्च किञ्चि-ज्जगथ्सर्व-न्दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तथ्सर्वं व्याँप्य नारायणस्स्थितः।।

अनन्तमव्ययङ्कविꣳ समुद्रेन्तँ व्विश्व शम्भुवम्। पद्मकोशः प्रतीकाशꣳ हृदय-ञ्चाप्यधोमुखम्।।

अधो निष्ट्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति। ज्वालमाला कुलं भाती विश्वस्यायतनं महत्।।

।। महानारायणम् ।।

सन्तत ँ शिलाभिस्तु लम्बत्याकोश सन्निभम्। तस्यान्ते सुषिर ँ सूक्ष्मन्तस्मिन् थ्सर्वं प्रतिष्ठितम्।।

तस्य मद्ध्ये महानग्नि र्विश्वार्चि र्विश्वतो मुखः। सोऽग्रभु- ग्विभजन्तिष्ठ- न्नाहारमजरः कविः।।

तिर्य-गूर्द्ध्व-मधश्शायी रश्मय स्तस्य सन्तता। सन्तापयति स्वन्देहमापादतल मस्तकः। तस्य मद्ध्ये वह्निशिखा अणीयोर्द्ध्वा व्यवस्थितः।।

।। महानारायणम् ।।

नीलतोयद मद्ध्यस्था- द्विद्युल्लेखेव भास्वरा। नीवार शूकवत्तन्वी पीता भास्वत्यणूपमा।।

तस्या श्शिखाया मद्ध्ये परमात्मा व्यवस्थितः। स ब्रह्म स शिव स्स हरि स्सेन्द्र स्सोऽक्षरः परम स्स्वराट्।।

ऋत ँ सत्यं परं ब्रह्म पुरुषङ्कृष्ण-पिङ्गलम्। ऊद्ध्र्वरेतँ व्विरूपाक्षँ व्विश्वरूपाय वै नमो नमः।।

नारायणाय विद्महे वासुदेवाय धीमहि।
तन्नो विष्णुः प्रचोदयात्।।

विष्णोर्नुकँ- व्वीर्याणि प्रवोचँ य्यः
पार्थिवानि विममे रजा ँ सि यो अस्कभाय-
दुत्तर ँ सधस्थँ व्विचक्रमाण स्त्रेधोरुगायो
विष्णो रराटमसि विष्णोः पृष्ठमसि विष्णो-
श्ञप्त्रेस्थो विष्णोस्स्यूरसि विष्णो र्ध्रुवमसि
वौष्णवमसि विष्णवे त्वा।।

*********

## ।। त्रिणाचिकेतम् ।।

## [४३]

(१) अयँव्वावयः पवते। सो ऽग्निर्नाचिकेतः। स यत्प्राङ्पवते। तदस्य शिरः। अथ यद्दक्षिणा। स दक्षिणः पक्षः। अथ यत्प्रत्यक्। तत्पुच्छम्। यदुदङ्ङ्। स उत्तरः पक्षः।[]।

अथ यथ्सँव्वाति। तदस्य समञ्चनञ्च प्रसारणञ्च। अथो संपदेवास्य सा। स ँ ह्वा अस्मै सकामः पद्यते। यत्कामो यजते। योऽग्निन्नाचिकेतञ्चिनुते। य उ चैनमेवँ व्वेद।

यो ह्वा अग्ने-र्नाचिकेतस्यायतनं प्रतिष्ठाँ-

।। त्रिणाचिकेतम्।।

व्वेद। आयतनवान्भवति। गच्छति प्रतिष्ठाम्। []। हिरण्यँव्वा अग्ने- र्नाचिकेतस्यातनं प्रतिष्ठा। य एवँव्वेद। आयतनवान्भवति।। गच्छति प्रतिष्ठाम्।।

यो हवा अग्ने- र्नाचिकेतस्य शरीरँ व्वेद। स शरीर एव स्वर्गँ-ल्लोकमेति। हिरण्यँव्वा अग्ने र्नाचिकेतस्य शरीरम्। य एवँ व्वेद। स शरीर एव स्वर्गल्ँल्लोकमेति।

अथो यथा रुक्म उत्तप्तो भाय्यात्।[]। एवमेव स तेजसा यशसा। अस्मिँ श्च लोकेऽमुष्मिँश्च भाति। उरवो हवै नामैते

।। त्रिणाचिकेतम् ।।

लोकाः। येऽवरेणादित्यम् ।।

अथ हैते वरीयाꣳसो लोकाः। ये परेणा-

दित्यम् ।।

अन्तवन्तꣳ हवा एष क्षय्यँ- ल्लोक-

ञ्जयति। योऽवरेणादित्यम् ।

अथ हैषोऽनन्त- मपारमक्षय्यँ- ल्लोक-

ञ्जयति। यः परेणादित्यम् ।।

अनन्तꣳ हवा अपारमक्षय्यँ- ल्लोक-

ञ्जयति। योऽग्नि- न्नाचिकेत- ञ्चिनुते। य उ

चैनमेवँ- व्वेद ।।

## ।। त्रिणाचिकेतम् ।।

अथो यथा रथे तिष्ठन्पक्षसी पर्यावर्तमाने प्रत्यपेक्षते। एवमहोरात्रे प्रत्यपेक्षते। नास्याहो-रात्रे लोक-माप्नुतः। योऽग्नि- न्नाचिकेत-ञ्चिनुते। य उ चैनमेवँ व्वेद।।

****

।। त्रिणाचिकेतम् ।।

(२) उशन् ह वै वाजश्रवसस्सर्ववेदसन्ददौ। तस्य ह नचिकेता नाम पुत्र आस। त ँ ह कुमार ँ सन्तम्। दक्षिणासु नीयमानासु श्रद्धाऽऽविवेश।

सहोवाच। तत कस्मै मान्दास्यसीति। द्वितीयन्तृतीयम्। त ँ ह परीत उवाच। मृत्यवे त्वा ददामीति।

त ँ ह स्मोत्थितँ- व्वागभि- वदति। []। गौतमकुमारमिति।

सहोवाच। परेहि मृत्योर्गृहान्। मृत्यवे वै

।। त्रिणाचिकेतम् ।।

त्वाऽदामिति। तँव्वै प्रवसन्तङ्गन्तासीति होवाच।

तस्यंस्म तिस्रो रात्रीरनाश्वान्गृहे वसतात्। स यदि त्वा पृच्छेत्। कुमार कति रात्रीरवात्सीरिति। तिस्र इति प्रतिब्रूतात्।

किं प्रथमाꣳ रात्रिमाश्ना इति।[]। प्रजान्त इति। किन्द्वितीयामिति। पशूꣳ स्त इति। किन्तृतीयामिति। साधुकृत्यान्त इति।

तँव्वै प्रवसन्तञ्जगाम। तस्य ह तिस्रो रात्रीरनाश्वान्गृह उवास। तमागत्य पप्रच्छ।

।। त्रिणाचिकेतम् ।।

कुमार कति रात्रीरवात्सीरिति। तिस्र इति प्रत्युवाच।[]।

किं प्रथमाँ रात्रिमाश्ना इति। प्रजान्त इति। किन्द्वितीयामिति। पशूँ स्त इति। किन्तृतीयामिति। साधुकृत्यान्त इति। नमस्ते अस्तु भगव इति होवाच।

वरँव्वृणीष्वेति। पितरमेव जीवन्नयानीति। द्वितीयँ व्वृणीष्वेति।[]। इष्टापूर्तयो र्मेऽक्षितिं ब्रूहीति होवाच।

तस्मै हैतमग्नि-न्नाचिकेत-मुवाच। ततो वै

।। त्रिणाचिकेतम्।।

तस्येष्टापूर्ते नाक्षीयेते। नास्येष्टापूर्ते क्षीयेते। योऽग्नि-न्नाचिकेत-ञ्चिनुते। य उचैनमेवँव्वेद। तृतीयँव्वृणीष्वेति। पुनर्मृत्यो र्मेऽपजितिं ब्रूहीति होवाच। तस्मै हैत-मग्नि- न्नाचिकेत-मुवाच। ततो वै सोऽपपुनर्मृत्युमजयत्। अप पुनर्मृत्युञ्जयति। योऽग्निन्नाचिकेतञ्चिनुते। य उ चैनमेवँव्वेद।।

प्रजापति वै प्रजाकाम- स्तपोऽतप्यत। स हिरण्यमुदास्यत्। तदग्नौ प्रास्यत्। तदस्मै नाच्छदयत्।

।। त्रिणाचिकेतम् ।।

तद्द्वितीयं प्रास्यत्। तदस्मै नैवाच्छदयत्।
तत्तृतीयं प्रास्यत्।[]। तदस्मै नैवाच्छदयत्।

तदात्मन्नेव हृदय्येऽग्नौ वैश्वानरे प्रास्यत्।
तदस्मा अच्छदयत्। तस्माद्धिरण्य-ङ्कनिष्ठ-
न्धनानाम्। भुञ्जत्प्रियतमम्। हृदयजꣳ हि।

स वै तमेव नाविन्दत्। यस्मै
तान्दक्षिणामनेष्यत्। ताꣳ स्वायैव हस्ताय
दक्षिणायानयत्। तां प्रत्यगृह्णात्।[]।

दक्षाय त्वा दक्षिणां प्रतिगृह्णामीति।
सोऽदक्षत दक्षिणां प्रतिगृह्य। दक्षते हवै

।। त्रिणाचिकेतम् ।।

दक्षिणां प्रतिगृह्य। य एवँव्वेद। एतद्धस्म वैतद्विद्वाᳫँसो वाजश्रवसा गोतमाः।

अप्यनूदेश्याँन्दक्षिणां प्रतिगृह्णन्ति। उभयेन वयन्दक्षिष्यामह एव दक्षिणां प्रतिगृह्येति। तेऽदक्षन्त दक्षिणां प्रतिगृह्य। दक्षते ह वै दक्षिणां प्रतिगृह्य। य एवँव्वेद। प्रहान्यं व्लीनाति।।

****

।। त्रिणाचिकेतम्।।

(३) तꣳ हैतमेके पशुबन्ध एवोत्तरवेद्या ञ्चिन्वते। उत्तरवेदि सम्मित एषोऽग्निरिति वदन्तः। तन्न तथा कुर्यात्। एतमग्निङ्कामेन व्यर्द्धयेत्। स एनङ्कामेन व्यृद्धः। कामेन व्यर्द्धयेत्।

सौम्ये वावैनमद्ध्वरे चिन्वीत। यत्र वा भूयिष्ठा आहुतयो हूयेरन्न्। एतमग्निङ्कामेन समर्द्धयति। स एनङ्कामेन समृद्धः।[]। कामेन समर्द्धयति।।

अथ हैनं पुरर्षयः। उत्तरवेद्यामेव

।। त्रिणाचिकेतम् ।।

सत्रियमचिन्वत। ततो वै तेऽविन्दन्त प्रजाम्। अभिस्वर्गँ-ल्लोक-मजयन्न्। विन्दत एव प्रजाम्। अभिस्वर्गँ-ल्लोक-ञ्जयति। योऽग्नि न्नाचिकेत-ञ्चिनुते। य उ चैनमेवँव्वेद।।

अथ हैनँ व्वायुर् ऋद्धिकामः।[]। यथा न्युप्तमेवोपदधे। ततो वै स एतामृद्धि-माद्ध्नोत्। यामिदँ व्वायुरृद्धः। एतामृद्धि-मृद्ध्नोति। यामिदँ व्वायुर् ऋद्धः। योऽग्नि-न्नाचिकेत-ञ्चिनुते। य उ चैनमेवँ व्वेद।।

अथ हैनङ्गोबलो वार्ष्णः पशुकामः।

।। त्रिणाचिकेतम् ।।

पाङ्क्तमेव चिक्ये। पञ्च पुरस्तात्।[]।
पञ्च दक्षिणतः। पञ्चपश्चात्। पञ्चोत्तरतः।
एकां मद्ध्ये। ततो वै स सहस्रं पशून्
प्राप्नोत्। प्रसहस्रं पशूनाप्नोति। योऽग्नि-
न्नाचिकेत-ञ्चिनुते। य उ चैनमेवँ व्वेद।।

अथ हैनं प्रजापति ज्यैष्ठ्यकामो
यशस्कामः प्रजननकामः। त्रिवृतमेव चिक्ये।
[]। सप्त पुरस्तात्। तिस्रो दक्षिणतः। सप्त
पश्चात्। तिस्र उत्तरतः। एकां मद्ध्ये। ततो
वै स प्रयशो ज्यैष्ठ्यमाप्नोत्। एतां प्रजातिं

।। त्रिणाचिकेतम् ।।

प्राजायत। यामिदं प्रजाः प्रजायन्ते। त्रिवृद्वै ज्यैष्ठ्यम्। माता पिता पुत्रः।[]। त्रिवृत्प्रजननम्। उपस्थो योनि-र्मद्ध्यमा। प्रयशो ज्यैष्ठ्यमाप्नोति।।

एतां प्रजातिं प्रजायते। यामिदं प्रजाः प्रजायन्ते। योऽग्निन्नाचिकेतञ्चिनुते। य उ चैनमेवँव्वेद।।

अथ हैनमिन्द्रो ज्यैष्ठ्यकामः। ऊद्ध्र्वा एवोपदधे। ततो वै स ज्यैष्ठ्यमगच्छत्।[]। ज्यैष्ठ्यङ्गच्छति। योऽग्निन्नाचिकेतञ्चिनुते।

।। त्रिणाचिकेतम्।।

य उ चैनमेवँव्वेद।।

अथ हैनमसावादित्य स्स्वर्गकामः। प्राचीरेवोपदधे। ततो वै सोऽभिस्वर्गँ-ल्लोक-मजयत्। अभि स्वर्गल्ँल्लोकञ्जयति। योऽग्निन्नाचिकेतञ्चिनुते। य उ चैनमेवँ व्वेद।

स यदीच्छेत्। []। तेजस्वी यशस्वी ब्रह्मवर्चसी स्यामिति। प्राङाहोतु र्द्धिष्ण्या-दुथ्सर्पेत्। येयं प्रगाद्यशस्वती। सा मा प्रोर्णोतु। तेजसा यशसा ब्रह्मवर्चसेनेति। तेजस्व्येव यशस्वी ब्रह्मवर्चसी भवति।।

।। त्रिणाचिकेतम्।।

अथ यदीच्छेत्। भूयिष्ठं मे श्रद्दधीरन्। भूयिष्ठा दक्षिणा नयेयुरिति। दक्षिणासु नीयमानासु प्राच्येहि प्राच्येहीति प्राची जुषाणा वेत्त्वाज्यस्य स्वाहेति स्रुवेणो-पहत्या-हवनीये जुहुयात्।[]। भूयिष्ठमेवास्मै श्रद्दधते। भूयिष्ठा दक्षिणा नयन्ति।।

पुरीषमुपधाय। चितिक्लृप्तिभि-रभिमृश्य। अग्निं प्रणीयोप-समाधाय। चतस्र एता आहुती-र्जुहोति।

।। त्रिणाचिकेतम् ।।

त्वमग्ने रुद्र इति शतरुद्रीयस्य रूपम्। अग्नाविष्णू इति वसोर्द्धारायाः। अन्नपत इत्यन्नहोमः। सप्त ते अग्ने समिध स्सप्तजिह्वा इति विश्वप्रीः।।

****

।। त्रिणाचिकेतम् ।।

(४) यां प्रथमा-मिष्टका-मुपदधाति। इमन्तया लोकमभिजयति। अथो या अस्मिँल्लोके देवताः। तासा ँ सायुज्य ँ सलोकता-माप्नोति।।

यान्द्वितीयामुपदधाति। अन्तरिक्ष लोक-न्तयाऽभिजयति। अथो या अन्तरिक्षलोके देवताः। तासा ँ सायुज्य ँ सलोकतामाप्नोति।

यान्तृतीया- मुपदधाति। अमुन्तया-लोकमभि- जयति। अथो या अमुष्मिँ-ल्लोके देवताः। तासा ँ सायुज्य ँ सलोकता-

माप्नोति ।।

अथो या अमूरितरा अष्टादश। य एवामी उरवश्च वरीयाँ सश्च लोकाः। तानेव ताभिरभिजयति। कामचारो हवा अस्योरुषु च वरीयस्सु च लोकेषु भवति। योऽग्निन्नाचिकेतञ्चिनुते। यउचैनमेवँव्वेद।।

सँव्वथ्सरो वा अग्नि र्नाचिकेतः। तस्य वसन्त शिशरः।[]। ग्रीष्मो दक्षिणः पक्षः। वर्षा उत्तरः। शरत्पुच्छम्। मासाः कर्मकाराः। अहोरात्रे शतरुद्रीयम्।

।। त्रिणाचिकेतम् ।।

पर्जन्यो वसोर्द्धारा। यथा वै पर्जन्य स्सुवृष्टँ-व्वृष्ट्वा। प्रजाभ्य स्सर्वान्कामान्-थ्संपूरयति। एवमेव स तस्य सर्वान् कामान्-थ्संपूरयति। योऽग्निर्न्नाचिकेतञ्चिनुते। []। य उ चैनमेवँ व्वेद।।

सँव्वथ्सरो वा अग्निर्नाचिकेतः। तस्य वसन्त शिशरः। ग्रीष्मो दक्षिणः पक्षः। वर्षाः पुच्छम्। शरदुत्तरः पक्षः। हेमन्तो मद्ध्यम्। पूर्वपक्षा-श्चितयः। अपर पक्षाः पुरीषम्। अहोरात्राणीष्टकाः। एष वाव सोऽग्नि-

।। त्रिणाचिकेतम् ।।

रग्निमयः पुनर्णवः। अग्निमयो ह वै पुनर्णवो भूत्त्वा। स्वर्गँल्लोकमेति। आदित्यस्य सायुज्यम्। योऽग्नि-न्नाचिकेत-ञ्चिनुते। य उ चैनमेवँ व्वेद।।

*********

## ।। त्रिणाचिकेतम् ।।

(५) ऋचां प्राची महती दिगुच्यते। दक्षिणामाहु र्यजुषामपाराम्। अथर्वणा-मङ्गिरसां प्रतीची। साम्नामुदीची महती दिगुच्यते।।

ऋग्भिः पूर्वाह्णे दिवि देव ईयते। यजुर्वेदे तिष्ठति मद्ध्ये अह्नः। सामवेदेनास्तमये महीयते। वेदैरशून्य-स्त्रिभिरेति सूर्यः।।

ऋग्भ्यो जाताँ सर्वशो मूर्तिमाहुः। सर्वागति र्याजुषी हैव शश्वत्।[]। सर्वन्तेज-स्सामरूप्यँह शश्वत्। सर्वँहेदं ब्रह्मणा हैव

सृष्टम्।।

ऋग्भ्यो जातँ व्वैश्यँव्वर्णमाहुः। यजुर्वेद-ङ्क्षत्रियस्याहु र्योनिम्। सामवेदो ब्राह्मणानां प्रसूतिः। पूर्वे पूर्वेभ्यो वच एतदूचुः।।

आदरृश-मग्नि-ञ्चिन्वानाः। पूर्वे विश्वसृजो-ऽमृताः। शतँ- व्वर्ष- सहस्राणि। दीक्षिता स्सत्रमासत।[]।।

तप आसीद्गृहपतिः। ब्रह्म ब्रह्माभव-थ्स्वयम्। सत्य ँ ह होतैषामासीत्। यद्विश्वसृज आसत।।

।। त्रिणाचिकेतम् ।।

अमृतमेभ्य उदगायत्। सहस्त्रं परिवथ्सरान्। भूत ँह प्रस्तोतैषामासीत्। भविष्यत्प्रतिचाहरत्।।

प्राणो अद्ध्वर्युरभवत्। इद ँ सर्व ँ सिषासताम्।[]। अपानो विद्वानावृतः। प्रतिप्रातिष्ठदद्ध्वरे।।

आर्तवा उपगातारः। सदस्या ऋतवोऽभवन्न्। अर्द्धमासाश्च मासाश्च। चमसाद्ध्वर्यवोऽभवन्न्।

अश ँ सद्-ब्रह्मण-स्तेजः। अच्छावाकोऽ-

।। त्रिणाचिकेतम्।।

भवद्यशः। ऋतमेषां प्रशास्तासीत्। यद्विश्वसृज आसत।[]।

ऊर्ग्राजानमुदवहत्। ध्रुवगोप स्सहोऽभवत्। ओजोऽभ्यष्टौद्ग्रावण्णः। यद्विश्वसृज आसत।

अपचितिः पोत्रीयामयजत्। नेष्ट्रीयामयजत्त्विषिः। आग्नीद्ध्राद्विदुषी सत्यम्। श्रद्धा हैवायजथ्स्वयम्।।

इरापत्नी विश्वसृजाम्। आकूतिरपिनड्ढविः।[]। इद्ध्म९ह क्षुच्चैभ्य उग्रे। तृष्णा चावहतामुभे।।

।। त्रिणाचिकेतम्।।

वागेषा ँ सुब्रह्मण्यासीत्। छन्दो योगान् विजानती। कल्पतन्त्राणि तन्वानाहः। सँस्थाश्च सर्वशः।।

अहोरात्रे पशुपाल्यौ। मुहूर्ताः प्रेष्या अभवन्न्। मृत्युस्तदभवद्धाता। शमितोग्रो विशां पतिः।।[]।।

विश्वसृजः प्रथमा स्सत्रमासत। सहस्रसमं प्रसुतेनयन्तः। ततो ह जज्ञे भुवनस्य गोपाः। हिरण्मय श्शकुनि ब्रह्म नाम।।

येन सूर्य स्तपति तेजसेद्धः। पिता पुत्रेण

।। त्रिणाचिकेतम् ।।

पितृमान् योनियोनौ। नावेदविन्मनुते तं बृहन्तम्। सर्वानुभुमात्मानँ संपराये।।

एष नित्यो महिमा ब्राह्मणस्य। न कर्मणा वर्द्धते नो कनीयान्।[]। तस्यैवात्मा पदवित्तं विदित्त्वा। न कर्मणा लिप्यते पापकेन।।

पञ्चपञ्चाशतस्त्रिवृतस्सँव्वथ्सराः। पञ्चपञ्चाशतः पञ्चदशाः। पञ्च पञ्चाशतस्सप्तदशाः। पञ्चपञ्चाशत एकविँशाः।।

विश्वसृजाँ सहस्रँ सँव्वथ्सरम्। एतेन वै विश्वसृज इदँ व्विश्व-मसृजन्त।

।। त्रिणाचिकेतम् ।।

यद्विश्वमसृजन्त। तस्माद्विश्वसृजः।। विश्वमेना-ननु प्रजायते। ब्रह्मण स्सायुज्य ँ सलोकताँ- य्यन्ति। एतासामेव देवताना ँ सायुज्यम्। सार्ष्टिता ँ समान-लोकताँ य्यन्ति।।

य एतदुपयन्ति। येचैनत्प्राहुः। येभ्यश्चैनत् प्राहुः। ओम्।।

********

।। ध्रुवमण्डले ब्रह्मोपस्थान मन्त्रः ।।

[४४] भूः प्रपद्ये भुवः प्रपद्ये स्वः प्रपद्ये भूर्भुवस्स्वः प्रपद्ये ब्रह्म प्रपद्ये ब्रह्मकोशं प्रपद्ये ऽमृतं प्रपद्येऽमृतकोशं प्रपद्ये चतुर्जालं ब्रह्मकोशँय्यं मृत्युर्नाव पश्यति तं प्रपद्ये देवान् प्रपद्ये देवपुरं प्रपद्ये परीवृतो वरीवृतो ब्रह्मणा वर्मणाऽहन्तेजसा कश्यपस्य यस्मै नम स्तच्छिरो धर्मो मूर्द्धानं ब्रह्मोत्तराहनु र्यज्ञो ऽधरा विष्णुर् हृदय ँ सँव्वँथ्सरः प्रजनन-मश्विनौ पूर्वपादावत्रि र्मद्ध्यं मित्रावरुणावपर-पादावग्निः पुच्छस्य प्रथमङ्काण्डन्तत

## ।। ध्रुवमण्डले ब्रह्मोपस्थान मन्त्रः ।।

इन्द्रस्ततः प्रजापतिरभय-ञ्चतुर्थ ँ स वा एष दिव्यश्शाक्वर शिशुमार-स्त ँ ह य एवँ-व्वेदापपुनर्मृत्युञ्जयति जयति स्वर्गल्ँल्लोक-न्नाद्ध्वनि प्रमीयते नाग्नौ प्रमीयते नाप्सु प्रमीयते नानपत्यः प्रमीयते लघ्वान्नो भवति द्ध्रुवस्त्वमसि द्ध्रुवस्यक्षितमसि त्त्वं भूतानामधिपतिरसि त्त्वं भूताना ँ श्रेष्ठोऽसि त्त्वां भूतान्युप पर्यावर्तन्ते नमस्ते नमस्सर्वन्ते नमो नम शिशुकुमाराय नमः।।

*********

## ।। दिगुपस्थान मन्त्रः ।।

[४५] नमः प्राच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो-

नमो दक्षिणायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो-

नमः प्रतीच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो-

नम उदीच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो-

नम ऊर्द्ध्वायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो-

## ।। दिगुपस्थान मन्त्रः ।।

नमोऽधरायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो-

नमोऽवान्तरायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो-

नमो गङ्गा यमुनयो र्मद्ध्ये ये वसन्ति ते मे प्रसन्नात्मान-श्चिरञ्जीवितँ-व्वर्द्धयन्ति

नमो गङ्गा यमुनयो र्मुनिभ्यश्च नमो नमो गङ्गा यमुनयो र्मुनिभ्यश्च नमः।।

********

## ।। शान्ति पञ्चकम् ।।

### [४६]

(१) शन्नो मित्रश्शँव्वरुणः। शन्नो भवत्त्वर्यमा। शन्न इन्द्रो बृहस्पतिः। शन्नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि। ऋतँ- व्वदिष्यामि। सत्यँ- व्वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारम्।

ओं शान्तिश्शान्तिश्शान्तिः।।

# ।। शान्ति पञ्चकम् ।।

(२) शन्नो मित्रश्शँव्वरुणः। शन्नो भवत्त्वर्यमा। शन्न इन्द्रो बृहस्पतिः। शन्नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्मावादिषम्। ऋतमवादिषम्। सत्यम-वादिषम्। तन्मामावीत्। तद्वक्तारमावीत्। आवीन्माम्। आवीद्वक्तारम्।

ओं शान्तिश्शान्तिश्शान्तिः।।

।। शान्ति पञ्चकम् ।।

(३) सह नाववतु। सह नौ भुनक्तु। सह वीर्यङ्करवावहै। तेजस्विनावधीतमस्तु मा विद्विषावहै। ओं शान्तिश्शान्तिश्शान्तिः।।

(४) नमो वाचे याचोदिता याचानुदिता तस्यै वाचे नमो नमो वाचे नमो वाचस्पतये नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो मा मामृषयो मन्त्रकृतो मन्त्रपतयः परादु र्माऽहमृषी-न्मन्त्रकृतो मन्त्रपती- न्परादाँ- व्वैश्वदेवीँ-व्वाचमुद्यासꣳ शिवामदस्ता- ञ्जुष्टा- न्देवेभ्य श्शर्म मे द्यौ श्शर्म पृथिवी

## ।। शान्ति पञ्चकम् ।।

शर्म विश्वमिदञ्जगत्।।

शर्मचन्द्रश्च सूर्यश्च शर्म ब्रह्म प्रजापती। भूतँ-व्वदिष्ये भुवनँ-व्वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यँ-व्वदिष्ये तस्मा अहमिद-मुपस्तरण-मुपस्तृण उपस्तरणं मे प्रजायै पशूनां भूयादुपस्तरणमहं प्रजायै पशूनां भूयासं प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टं मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमती- न्देवेभ्यो वाचमुद्यास ँ शुश्रूषेण्यां मनुष्येभ्य- स्तम्मा देवा अवन्तु शोभायै

।। शान्ति पञ्चकम् ।।

पितरोऽनुमदन्तु। ओं शान्तिश्शान्तिश्शान्तिः।

(५) तच्छँय्योरावृणीमहे।

गातुँय्यज्ञाय। गातुँ-य्यज्ञपतये। दैवीस्वस्तिरस्तु नः। स्वस्ति र्मानुषेभ्यः। ऊद्ध्र्व-ञ्जिगातु भेषजम्। शन्नो अस्तु द्विपदे। शञ्चतुष्पदे।

ओं शान्तिश्शान्तिश्शान्तिः।।

********

## ।। घोषशान्तिः ।।

### [४७]

शन्नो वातः पवतां मातरिश्वा शन्नस्तपतु सूर्यः। अहानि शं भवन्तु न श्शꣳ रात्रिः प्रतिधीयताम्।।

शमुषा नो व्युच्छतु शमादित्य उदेतु नः। शिवा न श्शन्तमाभव सुमृडीका सरस्वति। माते व्योम सन्दृशि।।

इडायै वास्त्वसि वास्तुमद्वास्तुमन्तो भूयास्म मा वास्तोश्छित्थ्स्मह्यवास्तु स्स भूयाद्योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मः।।

प्रतिष्ठाऽसि प्रतिष्ठावन्तो भूयास्म मा

।। घोषशान्तिः ।।

प्रतिष्ठायाश्चिथस्म्मह्यप्रतिष्ठ स्स भूयाद्योऽस्मा-
न्द्वेष्टि यञ्च वयन्द्विष्मः।।

आवातु वाहि भेषजँव्विवात-वाहि यद्रपः।
त्वꣳहि विश्वभेषजो देवानान्दूत ईयसे।।

द्वाविमौ वातौ वात आसिन्धोरापरावतः।
दक्षं मे अन्य आवातु पराऽन्यो वातु यद्रपः।।

यददो वात ते गृहेऽमृतस्य निधिर् हितः।
ततो नो देहि जीवसे ततो नो धेहि भेषजम्।
ततो नो मह आवह वात आवातु भेषजम्।।

## ।। घोषशान्तिः ।।

शंभू-र्मयोभू-र्नो हृदे प्रण आयूँ षि तारिषत्। इन्द्रस्य गृहोऽसि तन्त्वा प्रपद्ये सगुस्साश्वः। सह यन्मे अस्ति तेन।।

भूः प्रपद्ये भुवः प्रपद्ये सुवः प्रपद्ये भूर्भुवस्सुवः प्रपद्ये वायुं प्रपद्येऽनार्ता- न्देवतां प्रपद्येऽश्मानमाखणं प्रपद्ये प्रजापते र्ब्रह्मकोशं ब्रह्म प्रपद्य ओं प्रपद्ये।।

अन्तरिक्षं म उर्वन्तरं बृहदग्नयः पर्वताश्च यया वात-स्स्वस्त्या स्वस्तिमान्तया स्वस्त्या स्वस्ति मानसानि।।

।। घोषशान्तिः ।।

प्राणापानौ मृत्यो र्मा पातं प्राणापानौ मा मा हासिष्टं मयि मेधां मयि प्रजां मय्यग्नि स्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियन्दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु।।

द्युभिरक्तुभिः परिपात- मस्मान- रिष्टेभि- रश्विना सौभगेभिः। तन्नो मित्रो वरुणो मामहन्ता-मदिति स्सिन्धुः पृथिवी उतद्यौः।।

कयानश्चित्र आभुव दूती सदावृध स्सखा। कयाशचिष्ठया वृता।।

।। घोषशान्तिः ।।

कस्त्वा सत्यो मदानां मꣳ हिष्ठो
मथ्सदन्धसः। दृढा-चिदा-रुजे-वसु।।
अभीषुण स्सखीना-मविता-जरितॄणाम्।
शतं भवास्यूतिभिः।।
वयस्सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो
नाधमानाः। अपद्ध्वान्तमूर्णुहि पूर्द्धिचक्षु
र्मुमुग्ध्यस्मा-न्निधयेव बद्धान्।।
शन्नो देवीरभिष्टय आपो भवन्तु पीतये।
शँय्योरभिस्स्रवन्तुनः।।
ईशाना वार्याणाङ्-क्षयन्ती श्चर्षणीनाम्।

।। घोषशान्तिः ।।

अपो याचामि भेषजम्।।

सुमित्रान आप ओषधय स्सन्तु दुर्मित्रा स्तस्मै भूयासु र्योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मः।।

आपोहिष्ठा मयोभुव-स्तान ऊर्जे दधातन। महे रणाय चक्षसे। योव श्शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः। तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ। आपो जनयथा चनः।।

## ।। घोषशान्तिः ।।

पृथिवी शान्ता साऽग्निना शान्ता सा मे शान्ता शुचꣳ शमयतु। अन्तरिक्षꣳ शान्तन्तद्वायुना शान्तन्तन्मे शान्तꣳ शुचꣳ शमयतु। द्यौश्शान्ता साऽऽदित्येन शान्ता सा मे शान्ता शुचꣳशमयतु।।

पृथिवी शान्तिरन्तरिक्षꣳ शान्ति द्यौश्शान्ति दिंशश्शान्ति- रवान्तरदिशा-श्शान्ति- रग्निश्शान्ति- र्वायुश्शान्ति- रादित्यश्शान्ति- श्चन्द्रमाश्शान्ति-र्नक्षत्राणिशान्ति-रापश्शान्ति- रोषधयश्शान्ति र्वनस्पतयश्शान्ति गौश्शान्ति-

## ।। घोषशान्तिः ।।

रजाशान्ति- रश्वश्शान्तिः पुरुषश्शान्ति ब्रह्म शान्ति ब्राह्मणश्शान्ति- श्शान्तिरेव शान्तिश्शान्ति मे अस्तु।।

तयाऽह ँ शान्त्या सर्व शान्त्या मह्यन्द्विपदे चतुष्पदे च शान्तिङ्करोमि शान्तिर्मे अस्तु शान्तिः।।

एह श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यन्धर्मश्चैतानि मोत्तिष्ठन्त- मनूत्तिष्ठन्तु मामा ँ श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यन्धर्मश्चैतानि

## ।। घोषशान्तिः ।।

मा मा हासिषुः।।

उदायुषा स्वायुषोदोषधीना॒ँ रसेनो-
त्पर्जन्यस्य शुष्मेणोदस्था-ममृता॒ँ अनु।।

तच्चक्षु र्देवहितं पुरस्ताच्छुक्रमुच्चरत्।
पश्येम शरदश्शत-ञ्जीवेम शरदश्शत-न्नन्दाम
शरदश्शतं मोदाम शरदश्शतं भवाम
शरदश्शत॒ँ शृणवाम शरदश्शतं प्रब्रवाम
शरदश्शत-मजीतास्याम शरदश्शत-ञ्ज्योक्च
सूर्यन्दृशे।।

य उदगान्महतोऽर्णवा-द्विभ्राजमान-

## ।। घोषशान्तिः ।।

स्सरिरस्य मद्ध्याथ्स मा वृषभो लोहिताक्ष-स्सूर्यो विपश्चिन्मनसा पुनातु।।

ब्रह्मणश्चोतन्यसि ब्रह्मण आणीस्थो ब्रह्मण आवपनमसि धारितेयं पृथिवी ब्रह्मणा मही धारितमेनेन महदन्तरिक्ष-न्दिवन्दाधार पृथिवी ँ सदेवाँ-य्यदहँ-व्वेद तदहन्धारयाणि मामद्वेदोऽधि विस्त्रसत्। मेधामनीषे माविशता ँ समीची भूतस्य भव्यस्यावरुद्ध्यै सर्वमायुरयाणि सर्वमायुरयाणि।।

।। घोषशान्तिः ।।

आभिर्गीर्भि यदतोन ऊनमाप्यायय हरिवो वर्द्धमानः। यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अधते स्याम। ब्रह्म प्रावादिष्म तन्नो माहासीत्। ओं शान्तिश्शान्तिश्शान्तिः।।

********

[४८] ओन्नमो ब्रह्मणे नमो अस्त्वग्नयेनमः पृथिव्यै नम ओषधीभ्यः। नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि।।

।। हरिः ओ(३)म् ।।

## ।। वसोर्द्धारा स्तुतिः ।।

[४९]

वसोर्द्धाराञ्जुहोति वसोर्मे धाराऽसदिति वा एषा हूयते घृतस्य वा एनमेषा धाराऽमुष्मिँ ल्लोके पिन्वमानोपतिष्ठत आज्येन जुहोति तेजो वा आज्यन्तेजो वसोर्द्धारा तेजसैवास्मै तेजोऽवरुन्धेऽथो कामा वै वसोर्द्धारा कामानेवाऽवरुन्धे यङ्कामयेत प्राणानस्यान्नाद्यँ व्वि[] छिन्द्यामिति विग्राहन्तस्य जुहुयात् प्राणानेवास्यान्नाद्यँ-विच्छिनत्ति यङ्कामयेत प्राणा-नस्यान्नाद्य७ँ सन्तनुयामिति सन्ततान्तस्य जुहुयात् प्राणानेवास्या-

# ।। वसोर्द्धारा स्तुतिः ।।

न्नाद्य॑ᳫ सन्तनोति-

द्वादश द्वादशानि जुहोति द्वादश

मासा स्सँव्वथ्सर स्सँव्वथ्सरेणैवास्मा

अन्नमव रुन्धे-

ऽन्नञ्च मेऽक्षुच्च म इत्याहैतद्वा []

अन्नस्य रूपᳫ रूपेणैवान्नमव रुन्धे-

ऽग्निश्च म आपश्च म इत्याहैषा वा

अन्नस्य योनि स्सयोन्येवान्नमव रुन्धे-

ऽर्द्धेन्द्राणि जुहोति देवता एवाव रुन्धे

यथ्सर्वेषा-मर्द्धमिन्द्रः प्रति तस्मादिन्द्रो

## ।। वसोर्द्धारा स्तुतिः ।।

देवतानां भूयिष्ठभाक्तम इन्द्रमुत्तरमाहेन्द्रिय-
मेवास्मि-न्नुपरिष्टाद्दधाति-

यज्ञायुधानि जुहोति यज्ञो[] वै यज्ञायुधानि
यज्ञमेवाव रुन्धेऽथो एतद्वै यज्ञस्य रूप७
रूपेणैव यज्ञमवरुन्धे-

ऽवभृथश्च मे स्वगाकारश्च म इत्याह
स्वगाकृत्या-

अग्निश्च मे घर्मश्च म इत्याहैतद्वै
ब्रह्मवर्चसस्य रूप७ रूपेणैव ब्रह्मवर्चस-
मवरुन्ध-

## ।। वसोर्द्धारा स्तुतिः ।।

ऋक्च मे साम च मे इत्याहै[]तद्वै
छन्दसा ँ रूप ँ रूपेणैव छन्दा ँ स्यवरुन्धे-
गर्भाश्च मे वथ्साश्च मे इत्याहैतद्वै
पशूना ँ रूप ँ रूपेणैव पशूनवरुन्धे-
कल्पा-ञ्जुहोत्य-क्ळृप्तस्य क्ळृप्त्यै
युग्मदयुजे जुहोति मिथुनत्वायो- त्तरावती
भवतोऽभिक्रान्त्या-
एका च मे तिस्रश्च म इत्याह देवछन्दस-
व्वाँ एका च तिस्रश्च []
मनुष्यछन्दस-ञ्चतस्र-श्चाष्टौ च देवछन्दस-

## ।। वसोर्द्धारा स्तुतिः ।।

ञ्चैव मनुष्यछन्दस-ञ्चावरुन्ध-

आ त्रयस्त्रि॑ँशतो जुहोति त्रयस्त्रि॑ँशद्वै देवता देवता एवावरुन्ध-

आऽष्टाचत्वारि॑ँशज्जुहो-त्यष्टाचत्वारि॑ँ-शदक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनवरुन्धे-

वाजश्च प्रसवश्चेति द्वादशञ्जुहोति द्वादश मासा स्सँव्वथ्सर स्सँव्वथ्सर एव प्रति तिष्ठति।।

********

।। यासुगन्धा इत्यादि मन्त्राः ।।

[५०] यासुगन्धा रसा वर्णा बलञ्च निहिते उभे।
तास्त आप श्शिवा स्सन्तु सुकृतं प्रवहन्तु ते।।
या ऊर्जमभिषिञ्चन्ति देवेन प्रेषिता महीम्।
तास्त आप श्शिवा स्सन्तु सुकृतं प्रवहन्तु ते।।
यासा-न्निष्क्रमणे सर्वन्तदिद- ञ्जायते जगत्।
तास्त आप श्शिवा स्सन्तु सुकृतं प्रवहन्तु ते।।
यासामिमे त्रयो वेदास्तेजसा यशसा वृताः।
तास्त आप श्शिवा स्सन्तु सुकृतं प्रवहन्तु ते।।

********

।।याः प्राचीरित्यादि मन्त्राः ।।

[५१] याः प्राची रेवतीराप-स्स्रवन्ति शुक्राः।
तास्त आपश्शिवा स्सन्तु सुकृतं प्रवहन्तु ते।।
या दक्षिणा रेवतीराप-स्स्रवन्ति शुक्राः।
तास्त आप शिशवा स्सन्तु सुकृतं प्रवहन्तु ते।।
याः प्रतीची रेवतीराप-स्स्रवन्ति शुक्राः।
तास्त आप शिशवा स्सन्तु सुकृतं प्रवहन्तु ते।।
या उदीची रेवतीराप-स्स्रवन्ति शुक्राः।
तास्त आप शिशवा स्सन्तु सुकृतं प्रवहन्तु ते।।
या ऊद्ध्र्वा रेवतीराप स्स्रवन्ति शुक्राः।
तास्त आप शिशवा स्सन्तु सुकृतं प्रवहन्तु ते।।

*********

।। सुरास्त्वामित्यादि मन्त्राः ।।

[५२] सुरास्त्वामभिषिञ्चन्तु ब्रह्म विष्णु महेश्वराः।
वासुदेवो जगन्नाथ स्तथा सङ्कर्षणो विभुः।।
प्रद्युम्न- श्चानिरुद्धश्च भवन्तु विजयाय ते।
आखण्डलोऽग्नि र्भगवान् यमो वै निर्ऋति स्तथा।।
वरुणः पवनश्चैव धनाद्ध्यक्ष स्तथा शिवः।
ब्रह्मणा सहिता स्सर्वे दिक्पालाः पान्तु ते सदा।।
कीर्ति र्लक्ष्मी धृति र्मेधा पुष्टिश्श्रद्धा क्रियामतिः।
बुद्धिर्लज्जा वपुश्शान्तिः कान्तिस्तुष्टिश्च मातरः।।
एतास्त्वामभिषिञ्चन्तु देवपत्न्या स्समागताः।
आदित्या-श्चन्द्रमा भौमो बुध जीव सितार्कजाः।।
ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः।।
देव दानव गन्धर्व यक्ष राक्षस पन्नगाः।।
ऋषयो मुनयो गावो देव मातर एव च।
देवपत्न्यो द्रुमा नागा दैत्याश्चाफ्सरसां गणाः।।

।। सुरास्त्वामित्यादि मन्त्राः ।।

अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च।
औषधानि च रत्नानि कालस्या-वयवाश्च ये।।
सरित स्सागरा श्शैला स्तीर्थानि जलदा नदाः।
एते त्वामभिषिञ्चन्तु सर्व-कामार्थ सिद्धये।।
विघ्नेशः क्षेत्रपो दुर्गा लोकपाला नवग्रहाः।
सर्वकामप्रदा नित्यं यच्छन्तु तव मङ्गळम्।।
गङ्गानदी महापुण्या सरयू गण्डकी तथा।
गोमती धूतपापा च बाहुदा च सरस्वती।।
गोदावरी भीमरथी कृष्णवेणी कुमुद्वती।
तुङ्गभद्रा च कावेरी ताम्रपर्णी च कौशिकी।
नद्यस्त्वामभिषिञ्चन्तु तोयैः पातक नाशनैः।।
ऋग्वेदोऽथ यजुर्वेद स्सामवेद स्तथैव च।
अथर्ववेद श्चत्वारोऽप्यभिषिञ्चन्तु पुण्यदाः।।
लवणक्षीरतोयौ च घृतमण्डोदक स्तथा।
दधिमण्डोदकश्चैव सुरोद श्चापि सागरः।।

।। सुरास्त्वामित्यादि मन्त्राः ।।

तथैवेक्षुरसोदश्च ततः स्वादूदकश्च यः।
एते त्वामभिषिञ्चन्तु सागराः पुण्य वारिभिः।।
महाकल्पश्च कल्पश्च मन्वन्तर युगानि च।
सर्व्वँथ्सरा स्तथा सर्वे तथैवायनयो र्द्वयम्।।
ऋतवश्च तथा मासाः पक्षौ रात्र्यहनी तथा।
सन्ध्याश्च तिथयश्चैव मुहूर्ताः करणानि च।
एते त्वामभिषिञ्चन्तु कालस्यावयवा श्शुभाः।।

*********

## ।। दीपाराधन मन्त्राः [1] ।।

## [५३]

१. तत्पुरुषाय विद्महे महादेवाय धीमहि।
तन्नो रुद्रः प्रचोदयात्।।

२. तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि।
तन्नो दन्तिः प्रचोदयात्।।

३. तत्पुरुषाय विद्महे चक्रतुण्डाय धीमहि।
तन्नो नन्दिः प्रचोदयात्।।

४. तत्पुरुषाय विद्महे महासेनाय धीमहि।
तन्न-ष्षण्मुखः प्रचोदयात्।।

५. तत्पुरुषाय विद्महे सुवर्णपक्षाय धीमहि।
तन्नो गरुडः प्रचोदयात्।।

## ।। दीपाराधन मन्त्राः [1] ।।

६. वेदात्मनाय विद्महे हिरण्यगर्भाय धीमहि। तन्नो ब्रह्म प्रचोदयात्।।

७. नारायणाय विद्महे वासुदेवाय धीमहि। तन्नो विष्णुः प्रचोदयात्।।

८. वज्रनखाय विद्महे तीक्ष्णदꣳष्ट्राय धीमहि। तन्नो नारसिꣳहः प्रचोदयात्।।

९. भास्कराय विद्महे महद्द्युतिकराय धीमहि। तन्नो आदित्यः प्रचोदयात्।।

१०. वैश्वानराय विद्महे लालीलाय धीमहि। तन्नो अग्निः प्रचोदयात्।।

।। दीपाराधन मन्त्राः [2] ।।

११. कात्यायनाय विद्महे कन्यकुमारि धीमहि। तन्नो दुर्गिः प्रचोदयात्।।

****

१. यो देवानां प्रथमं पुरस्ताद्विश्वाधियो रुद्रो महर्षिः। हिरण्यगर्भं पश्यत जायमानꣳ स नो देवश्शुभया स्मृत्या-स्सँय्युनक्तु।।

२. यस्मात्पर-न्नापरमस्ति किञ्चिद्यस्मा-न्नाणीयो न ज्यायोऽस्ति कश्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्।।

।। दीपाराधन मन्त्राः [2] ।।

३. न कर्मणा न प्रजया धनेन त्यगेनैके अमृतत्वमानशुः। परेण नाकन्निहितङ्गुहायाँ-व्विभ्राजदेतद्यतयो विशन्ति।।

४. वेदान्त विज्ञान सुनिश्चितार्था स्सन्यास योगाद्यतय-श्शुद्धसत्वाः। ते ब्रह्मलोके तु परान्त काले परामृतात्परिमुच्यन्ति सर्वे।।

५. दहँ-व्विपापं परमेश्मभूतँ-य्यत्पुण्डरीकं पुरमद्ध्य सꣳस्थम्। तत्रापि दहङ्गगनँ- व्विशोक- स्तस्मिन् यदन्त-स्तदुपासितव्यम्।।

।। दीपाराधन मन्त्राः [2] ।।

४. यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः। तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः।।

७. सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः। भवेभवे नातिभवे भवस्वमाम्।। भवोद्भवाय नमः।।

८. वामदेवाय नमो ज्येष्ठाय नमश्श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमस्सर्वभूत-दमनाय नमो मनोन्मनाय नमः।।

## ।। दीपाराधन मन्त्राः [2] ।।

९. अघोरेभ्योऽथ घोरेभ्यो घोर घोरतरेभ्यः। सर्वेभ्य-स्सर्व शर्वेभ्यो नमस्ते अस्तु रुद्र रूपेभ्यः।।

१०. तत्पुरुषाय विद्महे महादेवाय धिमहि। तन्नो रुद्रः प्रचोदयात्।।

११. ईशान स्सर्व विद्यानामीश्वर-स्सर्व भूतानां ब्रह्माधिपति ब्रह्मणोऽधिपति ब्रह्मा शिवो मे अस्तु सदाशिवोम्।।

****

।। दीपाराधन मन्त्राः [3] ।।

१. योऽसौ तपन्नुदेति। स सर्वेषां भूतानां प्राणानादायोदेति। मामे प्रजाया मा पशूनाम्। मा मम प्राणानादायोदगाः।।

२. असौ योऽस्तमेति। स सर्वेषां भूतानां प्राणानादायास्तमेति। मा मे प्रजाया मा पशूनाम्। मामम प्राणानादायास्तङ्गाः।।

३. असौ य आपूर्यति। स सर्वेषां भूतानां प्राणैरापूर्यति। मामे प्रजाया मा पशूनाम्। मा मम प्राणैरापूरिष्ठाः।।

४. असौ योऽपक्षीयति। स सर्वेषां भूतानां प्राणैरपक्षीयति। मा मे प्रजाया मा

## ।। दीपाराधन मन्त्राः [3] ।।

पशूनाम्। मा मम प्राणैरपक्षेष्ठाः।।

५. अमूनि नक्षत्राणि। सर्वेषां भूतानां प्राणैरप प्रसर्पन्ति चोथ्सर्पन्ति च। मामे प्रजाया मा पशूनाम्। मा मम प्राणैरप प्रसृपत मोथ्सृपत।।

६. इमे मासाश्चार्द्धमासाश्च। सर्वेषां भूतानां प्राणैरप प्रसर्पन्ति चोथ्सर्पन्ति च। मा मे प्रजाया मा पशूनाम्। मा मम प्राणैरप प्रसृपत मोथ्सृपत।।

७. इम ऋतवः। सर्वेषां भूतानां

।। दीपाराधन मन्त्राः [3] ।।

प्राणैरप प्रसर्पन्ति चोथ्सर्पन्ति च। मा मे प्रजाया मा पशूनाम्। मा मम प्राणैरपप्रसृपत मोथ्सृपत।।

८. अयँ सँव्वथ्सरः। सर्वेषां भूतानां प्राणैरप प्रसर्पति चोथ्सर्पति च। मा मे प्रजाया मा पशूनाम्। मा मम प्राणैरपप्रसृप मोथ्सृप।।

९. इदमहः। सर्वेषां भूतानां प्राणैरप प्रसर्पति चोथ्सर्पति च। मा मे प्रजाया मा पशूनाम्। मा मम प्राणैरप प्रसृप मोथ्सृप।।

## ।। दीपाराधन मन्त्राः [3] ।।

१०. इयꣳरात्रिः। सर्वेषां भूतानां प्राणैरप प्रसर्पति चोत्सर्पति च। मा मे प्रजाया मा पशूनाम्। मा मम प्राणैरप प्रसृप मोत्सृप।।

ओं भूर्भुवस्स्वः। एतद्वो मिथुनं मा नो मिथुनꣳरीढ्वम्।।

*********

।। दीपाराधन मन्त्राः [4] ।।

१. ब्राह्मण एकहोता। स यज्ञः। स मे ददातु प्रजां पशून्पुष्टिँय्यशः। यज्ञश्च मे भूयात्।।

२. अग्नि-र्द्विहोता। स भर्ता। स मे ददातु प्रजां पशून्पुष्टिँय्यशः। भर्ता च मे भूयात्।।

३. पृथिवी त्रिहोता। स प्रतिष्ठा। स मे ददातु प्रजां पशून्पुष्टिँय्यशः। प्रतिष्ठा च मे भूयात्।।

४. अन्तरिक्षञ्चतुर्होता। स विष्ठाः। स मे ददातु प्रजां पशून्पुष्टिँय्यशः। विष्ठाश्च मे भूयात्।।

।। दीपाराधन मन्त्राः [4] ।।

५. वायुः पञ्चहोता। स प्राणः। स मे ददातु प्रजां पशूंपुष्टिँय्यशः। प्राणश्च मे भूयात्।।

६. चन्द्रमा ष्षड्ढोता। स ऋतून् कल्पयाति। स मे ददातु प्रजां पशूंपुष्टिँ-य्यशः। ऋतवश्च मे कल्पन्ताम्।।

७. अन्नँ सप्तहोता। स प्राणस्य प्राणः। स मे ददातु प्रजां पशूंपुष्टिँय्यशः। प्राणस्य च मे प्राणो भूयात्।।

८. द्यौरष्टहोता। सोऽनाधृष्यः। स मे ददातु प्रजां पशूंपुष्टिँय्यशः। अनाधृष्यश्च मे

भूयासम्।।

९. आदित्यो नवहोता। स तेजस्वी। स मे ददातु प्रजां पशून्पुष्टिँय्यशः। तेजस्वी च भूयासम्।।

१०. प्रजापति र्दशहोता। स इद९ँ सर्वम्। स मे ददातु प्रजां पशून्पुष्टिँय्यशः। सर्वञ्च मे भूयात्।।

*********

## ।। दीपाराधन मन्त्राः [5] ।।

१. आज्येन जुहोति। अग्ने र्वा एतद्रूपम्। यदाज्यम्। यदाज्येन जुहोति। अग्निमेव तत्प्रीणाति।।

२. मधुना जुहोति। महत्यैवा एतद्देवतायै रूपम्। यन्मधु। यन्मधुना जुहोति। महतीमेव तद्देवतां प्रीणाति।।

३. तण्डुलै र्जुहोति। वसूनाँ र्वा एतद्रूपम्। यत्तण्डुलाः। यत्तण्डुलै र्जुहोति। वसूनेव तत्प्रीणाति।।

।। दीपाराधन मन्त्राः [5] ।।

४. पृथुके जुहोति। रुद्राणाँ व्वा एतद्रूपम्। यत्पृथुकाः। यत्पृथुके जुहोति। रुद्रानेव तत्प्रीणाति।।

५. लाजै जुहोति। आदित्यानाँ व्वा एतद्रूपम्। यल्लाजाः। यल्लाजै जुहोति। आदित्यानेव तत्प्रीणाति।।

६. करम्बै जुहोति। विश्वेषाँ व्वा एतद्देवतानाᳬरूपम्। यत्करम्बाः। यत्करम्बै जुहोति। विश्वानेव तद्देवान्प्रीणाति।।

।। दीपाराधन मन्त्राः [5] ।।

७. धानाभिर्जुहोति। नक्षत्राणाँ व्वा एतद्रूपम्। यद्धानाः। यद्धानाभिर्जुहोति। नक्षत्राण्येव तत्प्रीणाति।।

८. सक्तुभिर्जुहोति। प्रजापतेर्वा एतद्रूपम्। यत्सक्तवः। यत्सक्तुभिर्जुहोति। प्रजापतिमेव तत्प्रीणाति।।

९. मसूस्यैर्जुहोति। सर्वासाँ व्वा एतद्देवतानां रूपम्। यन्मसूस्यानि। यन्मसूस्यैर्जुहोति। सर्वा एव तद्देवताः प्रीणाति।।

।। दीपाराधन मन्त्राः [5] ।।

१०. प्रियङ्गुतण्डुलै र्जुहोति। प्रियाङ्गा ह वै नामैते। एतै र्वै देवा अश्वस्याङ्गानि समदधुः। यत्प्रियङ्गुतण्डुलै र्जुहोति। अश्वस्यैवाङ्गानि सन्दधाति।।

११. दशान्नानि जुहोति। दशाक्षरा विराट्। विराट् कृथ्स्नस्यान्नाद्यस्यावरुद्ध्यै।।

*********

## ।। दीपाराधन मन्त्राः [6] ।।

१. एष वै विभू र्नाम यज्ञः। सर्वꣳहवै तत्र विभु भवति। यत्रैतेन यज्ञेन यजन्ते।।

२. एष वै प्रभू र्नाम यज्ञः। सर्वꣳह वै तत्र प्रभु भवति। यत्रैतेन यज्ञेन यजन्ते।।

३. एष वा ऊर्जस्वा-न्नाम यज्ञः। सर्वꣳह वै तत्रोर्जस्वद्भवति। यत्रैतेन यज्ञेन यजन्ते।।

४. एष वै पयस्वा-न्नाम यज्ञः। सर्वꣳह वै तत्र पयस्वद्भवति। यत्रैतेन यज्ञेन यजन्ते।।

५. एष वै विधृतो नाम यज्ञः। सर्वꣳह वै तत्र विधृतं भवति। यत्रैतेन यज्ञेन यजन्ते।।

।। दीपाराधन मन्त्राः [6] ।।

६. एष वै व्यावृत्तो नाम यज्ञः। सर्वꣳ हवै तत्र व्यावृत्तं भवति। यत्रैतेन यज्ञेन यजन्ते।।

७. एष वै प्रतिष्ठितो नाम यज्ञः। सर्वꣳ ह वै तत्र प्रतिष्ठितं भवति। यत्रैतेन यज्ञेन यजन्ते।।

८. एष वै तेजस्वी नाम यज्ञः। सर्वꣳ ह वै तत्र तेजस्वि भवति। यत्रैतेन यज्ञेन यजन्ते।।

९. एष वै ब्रह्मवर्चसी नाम यज्ञः। आह वै तत्र ब्राह्मणो ब्रह्मवर्चसी जायते। यत्रैतेन यज्ञेन यजन्ते।।

## ।। दीपाराधन मन्त्राः [6] ।।

१०. एष वा अतिव्याधी नाम यज्ञः। आह वै तत्र राजन्योऽतिव्याधी जायते। यत्रैतेन यज्ञेन यजन्ते।।

११. एष वै दीर्घो नाम यज्ञः। दीर्घायुषो ह वै तत्र मनुष्या भवन्ति। यत्रैतेन यज्ञेन यजन्ते।।

१२. एष वै क्लृप्तो नाम यज्ञः। कल्पते ह वै तत्र प्रजाभ्यो योगक्षेमः। यत्रैतेन यज्ञेन यजन्ते।।

*********

।। धूप-दीप-नीराजन मन्त्राः ।।

[५५]

धूपम्-

धूरसि धूर्व धूर्वन्त-न्धूर्वतँ-य्योऽस्मा-
न्धूर्वति तन्धूर्व यँव्वयन्धूर्वाम-स्त्व- न्देवाना-
मसि सस्नितमं पप्रितम-ञ्जुष्टतमँ-व्वह्नितम
-न्देवहूतम-मह्रुतमसि हविर्द्धान- न्दृ ँ हस्व
माह्वा र्मित्रस्य त्वा चक्षुषा प्रेक्षे मा भे र्मा
सँव्विक्था मा त्वा हि ँसिषम्।।

****

।। धूप-दीप-नीराजन मन्त्राः ।।

दीपम्-

उद्दीप्यस्व जातवेदोऽपघ्न-न्निर्ऋतिं मम।
पशूँश्च मह्यमावह जीवनञ्च दिशोदिश।।
मा नो हिँसीज्जातवेदो गामश्वं
पुरुषञ्जगत्। अबिभ्रदग्न आगहि श्रिया मा
परि पातय।।

****

।। धूप-दीप-नीराजन मन्त्राः ।।

पञ्चमुख दीपम्-

सप्रथ सभां मे गोपाय। ये च सभ्याः-स्सभासदः। तानिन्द्रियावतः कुरु। सर्वमायु-रुपासताम्। अहे बुद्ध्निय मन्त्रं मे गोपाय। यमृषय- स्त्रैविदाविदुः। ऋचस्सामानि यजूꣳषि। सा हि श्रीरमृतासताम्।।

पञ्चहूतो ह वै नामैषः। तँव्वा एतं पञ्चहूतꣳ सन्तम्। पञ्चहोतेत्या चक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः।।

****

## ।। धूप-दीप-नीराजन मन्त्राः ।।

नीराजनम्-

सोमो वा एतस्य राज्यमादत्ते। यो राजा सन्राज्यो वा सोमेन यजते। देवसुवामेतानि हवी ँ षि भवन्ति। एतावन्तो वै देवाना ँ सवाः। त एवास्मै सवान्प्रयच्छन्ति। त एनं पुनस्सुवन्ते राज्याय। देवसू राजा भवति।।

बहुग्वै बह्वश्वायै बह्वजाविकायै। बहु व्रीहियवायै बहुमाष तिलायै। बहु हिरण्यायै बहुहस्तिकायै। बहु दासपूरुषायै रयिमत्यैपुष्टिमत्यै। बहुरायस्पोषायै राजाऽस्तु।।

********

।। प्रोक्षण-प्राशन मन्त्राः ।।

देवस्य त्वा सवितुः प्रसवे। अश्विनो बाहुभ्याम्। पूष्णो हस्ताभ्याम्। अश्विनो भैषज्येन। तेजसे ब्रह्मवर्चसायाभि-षिञ्चामि।।

देवस्य त्वा सवितुः प्रसवे। अश्विनो बाहुभ्याम्। पूष्णो हस्ताभ्याम्। सरस्वत्यै भैषज्येन। वीर्याया-न्नाद्याया-भिषिञ्चामि।।

देवस्य त्वा सवितुः प्रसवे। अश्विनो बाहुभ्याम्। पूष्णो हस्ताभ्याम्। इन्द्रस्ये-न्द्रियेण। श्रियै यशसे बलायाभिषिञ्चामि।।

## ।। प्रोक्षण-प्राशन मन्त्राः ।।

देवस्य त्वा सवितुः प्रसवेऽश्विनो र्बाहुभ्याम् पूष्णो हस्ताभ्या ँ सरस्वत्यै वाचो यन्तु र्यन्त्रेणाग्नेस्त्वा साम्राज्येनाभि-षिञ्चामीन्द्रस्य त्वा साम्राज्येनाभिषिञ्चामि बृहस्पतेस्त्वा साम्राज्येनाभिषिञ्चामि ।।

*आयुराशास्तेऽयँ-य्यजमानोऽसौ ।*

आयुराशास्ते । सुप्रजास्त्वमाशास्ते । सजातवनस्यामाशास्ते । उत्तरान्देवयज्या-माशास्ते । भूयो हविष्करणमाशास्ते । दिव्यन्धामाशास्ते । विश्वं प्रियमाशास्ते । तदश्यात्तदृद्ध्यात् । तदस्मै देवा रासन्ताम् ।।

## ।। प्रोक्षण-प्राशन मन्त्राः ।।

तदग्नि र्देवो देवेभ्यो वनते। वयमग्ने र्मानुषाः। इष्टञ्च वीतञ्च। उभे च नो द्यावापृथिवी अꣳहस्पाताम्। इह गति र्वामस्येदञ्च। नमो देवेभ्यः।।

द्रुपदादिवेन्मुमुचानः। स्विन्न स्स्नात्वी मलादिव। पूतं पवित्रेणेवाज्यम्। आपः श्शुन्धन्तु मैनसः।। भूर्भुवस्सुवो भूर्भुवस्सुवः॥

****

## ।। प्रोक्षण-प्राशन मन्त्राः ।।

अकाल मृत्युहरणं सर्वव्याधि निवारणं
समस्तपापक्षयकरं ......पादोदकं शुभम्।।

आमयावी चिन्वीत। आपो वै भेषजम्।
भेषजमेवास्मै करोति। सर्वमायुरेति।।

********

।। आशीर्वाद मन्त्राः ।।

[५६]

पर्याप्त्या अनन्तरायाय सर्वस्तोमोऽतिरात्र उत्तममहर्भवति सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेव तेनाऽऽप्नोति सर्वञ्जयति।।

ऋद्ध्यास्म हव्यै र्नमसोपसद्य। मित्रन्देवं मित्रधेयन्नो अस्तु। अनूराधान् हविषा वर्द्धयन्तः। शतञ्जीवेम शरद स्सवीराः।।

नवोनवो भवति जायमानोऽह्नाङ्केतु-रुषसामेत्यग्रे। भागन्देवेभ्यो विदधात्याय-न्प्रचन्द्रमा-स्तिरति दीर्घमायुः।।

सुमङ्गलीरियँ-व्वधूरिमा ँ समेत पश्यत। सौभाग्यमस्यै दत्वा याथास्तं विपरेतन।।

।। आशीर्वाद मन्त्राः ।।

इमान्त्वमिन्द्रमीढ्व स्सुपुत्रा॑ सुभगाङ्कुरु।
दशास्यां पुत्रानाधेहि पति-मेकादशङ्कृधि।।

अग्निस्तुविश्रवस्तमं तुवि ब्रह्माणमुत्तमम्।
अतूर्तं श्रावयत्पतिं पुत्रं ददाति दाशुषे।।

यशस्करं बलवन्तं प्रभुत्त्वं तमेव राजाऽधिपति र्बभूव। सङ्कीर्ण नागाश्वपति र्नराणां सुमङ्गल्यं सततं दीर्घमायुः।।

शतमानं भवति। शतायुः पुरुष-श्शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति।।

।। हरिः ओ(३)म् ।।